# श्रीगान्धिचरितम्

[ महाकाव्यम् ]

रचयिता

हथुआराज्याधीश्वरस्वर्गीयश्रीमन्महाराजश्रीकृष्णप्रतापशाही
महोदय-राजसभाप्रधानपण्डितश्रीजयराममिश्रशर्मतनूजः,
भूतपूर्वविहारसंस्कृतसमितिकौंसिलसदस्यः,
नरकटियागञ्जस्थ
श्रीजानकीसंस्कृतविद्यालय-
प्रधानाचार्यः।

पण्डितश्रीसाधुशरणशर्ममिश्रः सरयूपारीणः।

सवत् २०१९ वैक्रमः

प्रथम सन्करणम्
१०००

# श्रीगान्धिचरितस्य—

कविः

श्रीसाधुशरणमिश्रः

# किञ्चिद्वक्तव्यम् ।

चिरादभून्मनसि ममाय विचारो यत्कमपि विषयमवलम्ब्य कश्चित्प्रबन्धो रचयितव्य इति तावदेवाकस्मादतर्कितो वज्रपात इव प्रातःस्मरणीयनाम्ना भगवत्परमविभूतीना श्रीगान्धिमहात्मना परमनिर्वाणपदसम्प्राप्तिवृत्तान्तः सहसा हृदय विदारयन्निव श्रवणगोचरोऽभूत् । तच्छोकाकुलितचेतसैव मया वाचस्पतिनापि वक्तुमशक्याना तद्दिव्यगुणाना साधनविहीनेन मन्दधियापि वर्णन प्रारब्धम् ।

तेषामेव महात्मनामनुकम्पया 'गान्धिचरित' नाम महाकाव्य सर्गैरेकोनविंशत्या समाप्तिमगात् । नात्र स्वतःसम्भवीतरानेकविधालङ्कृतिप्रदर्शनार्थं कोऽपि प्रयासः कृतो न वा समासबाहुल्यमेवाश्रित नापि च रसास्वादविलम्बकारिणा यमकादीना सग्रहः कृतः । पाठकाना सद्यःपरमानन्दसप्राप्तिनिमित्तं प्रायः प्रसादगुण एवास्ति सोऽप्यत्र स्वभावसिद्ध एव ।

महात्मनोऽभिधेयवाचको गान्धिशब्दः क्वचिदिन्नन्तः क्वापि ह्रस्वेकारान्तश्च प्रयुक्तः । प्रायो महाकवयो निरूढसज्ञाशब्देषु छन्दोऽनुकूलमेव व्यवहरन्ति । अत एव "अपि माष मष कुर्याच्छन्दोभङ्ग न कारये" दिति विदुषा प्रवाद । तत एव हेतोर्बुद्धचरितमहाकाव्ये महाकविरश्वघोषो 'दिलिप' इति प्रायुङ्क्त ।

अपरिनिष्ठितसज्ञाशब्देषु शास्त्रीयनियामकाभावात परिस्थितिविशेषानुरोधाद् यथेच्छ वाग्व्यवहार इति शिष्टसम्मतम् । एतेनैव सिद्धान्तबलेन महाकविः पण्डितराजश्रीजगन्नाथः हस्तिनापुरस्य दिल्लीनाम्नैव प्रयोगं कृतवान् -

"दिल्लीवल्लभपाणिपल्लवतल" इत्यादि

"दिल्लीश्वरो वा जगदीश्वरो वा" इति च ।

अनेनैव हेतुना मयापि गान्धिचरितमहाकाव्ये कुत्रचिन् हस्तिनापुरस्य दिल्लीशब्देन प्रयोगः कृतः ।

महात्मनो ग्रन्थप्रणेतुश्च समानकालत्वेऽपि देशकृतं परोक्षत्वमादाय

लिटा प्रयोगः कृतः साधुरेव, कालकृतवद्देशकृतत्वस्यापि परोक्षत्वात्। प्रायो महात्मना कृतमात्मकथानामकपुस्तकमाधारीकृत्यैव तच्चरितमुपनिबद्धम्। क्वचिन्नायकत्वमर्यादापरिरक्षणानुरोधाल्लघीयास्तद्विपर्यासो यथा—महात्मा गान्धिस्तु स्वयमेव गोखलेलोकमान्यतिलकान्तिकमगमत्। किन्तु नायकत्वपरिरक्षणानुरोधाद् तदन्तिकमेवैतयोरुपगम उपनिबद्धः प्रायः कवीना रचनासु तथोपलम्भात्। तथाहि—जनकनगरीतः प्रत्यावर्तने रामपरशुरामयोर्मध्येमार्गं समागमस्य शास्त्रसिद्धत्वेऽपि कतिपये महाकवयः जनकपुर्य्यामेव वर्णनं कृतवन्तः।

ग्रन्थस्यास्य प्रणयने प्रकाशने च योग्या सम्मतिं प्रदत्तवद्भ्यो विहारराज्यमुख्यमन्त्रिस्वर्गीयडाक्टरश्रीकृष्णसिंहमहोदयभारतीयसंसत्सदस्यश्रीविपिनविहारिवर्ममहोदयभूतपूर्वविहारराज्योपमन्त्रिपण्डितश्रीकेदारपाण्डेय नरकटियागंजस्थन्यूस्वदेशीसुगरमिलजेनरलमैनेजरश्रीफतहलालवाढिया एम० ए० प्रेमजननी संस्कृतविद्यालयप्रधानाचार्य पण्डितश्रीकमलाकान्तशर्मत्रिपाठिभ्यः कोटिशो धन्यवादान् एतत्कृतोपकृतीरविस्मरन् वितरामि।

अत्र चेन्मानवप्रकृतिवशात्क्रमपि स्खलितमपि जातं सततं गुणैकपक्षपातिना सहृदयविदुषा पाठकाना विशुद्धतमे हृदये गतं सत्तदोषगुणयागाद्गङ्गाम्भसि पतित सद्रथ्योदकमिव पवित्रतामेव भजेन्न दूषणताम्। ममेह कृतश्रमाणा साफल्यं पाठकानामात्परितोषादेव भवेदिति बलीयान् मे विश्वास।

तथापीह किमपि स्खलितं बुद्धिव्यामोहाज्जातन्तत पाठकाः सुधीश्वरा कृपया मर्षयन्तु—

"यदत्र किञ्चित्स्खलनं बुद्धिजं मे भवेत्तदा।<br>तत्क्षाम्यन्तु मुदा सन्तो गुणग्रहणगृध्नवः॥"

इति विरमति विदुषामाश्रवः—

नरकटियागञ्जः, साधुशरणमिश्रः।

चम्पारण्यम्। (श्रीजानकीसंस्कृतविद्यालयप्रधानाध्यापकः)

गङ्गादशहरा

सं० २०१९ वै०

## विपश्चिदपश्चिमानां विहारविश्वविद्यालयहिन्दी-विभागाध्यक्षश्रीदेवेन्द्रनाथशर्ममहोदयानां सम्मतिः।

विद्वद्वरेण्य प० श्री साधुशरण मिश्र विरचित गान्धिचरितमेकमभिनवं महाकाव्य वीक्ष्य प्रमुदितान्तःकरणः सत्यमस्मि सवृत्त । आधुनिकं प्रत्यक्ष-वृत्त महीयसोऽपि चरितमुपादाय अनल्पकल्पनापटीयसा शब्दार्थसाहित्य-कौशलकोविदानामपि कवीना कृते पुरोवृत्ततत्त्वावधारितचेतसा भावुकाना प्रसादन सुमहत्काठिन्यमावहतीति नाविदित काव्येक्षणपरीक्षणायत्तान्तस्त-त्त्वजुषा विदुषाम् । अथ च कालिदासभारविहर्षाद्यवधारितो लोकोत्तरप्रति-भावतामपि दुरवगाहोऽय सस्कृतकाव्यनिबन्धमार्गः । तथाऽपि सुदीर्घकाल-सारस्वतोपासनाप्रक्षालितान्तर्भ्रान्तिः, समधिगतरचनापाटवीकोऽसौ कविवरो महत्सौष्ठवोपेतं प्रसादगुणाप्यायितमविच्छिन्नप्रवाह काव्यमिद प्रकटयितु सफलोद्यमोऽभूदिति मेऽस्त्युच्चैरावोध. । साम्प्रत सस्कृतस्य कालप्राप्तमल्प-प्रचारम् अथ च विभिन्नजातीयसक्रमणोद्भूतसस्कृतिसकर, नैकशताब्दि-पारवश्यतासञ्जातमुमूर्षु चेतनं कदाचिज्जगद्गुरुभूत भारतीय प्राप्य सर्वजन-समादृतं स्वसस्कृते. सत्त्वाधिष्ठानभूत राष्ट्रपितुश्चरितमुपगातु सम्प्रवृत्तोय कविः तद् द्वारा स्वदेशं स्वसस्कृतिं स्वभारतीञ्च समुपासमानः चिरमस्मदभिनन्द-नीयता भजते ।

—इति विश्वसिति

**देवेन्द्रनाथ शर्मा**

विहार विश्वविद्यालयः

हिन्दी विभागाध्यक्षः ।

पौषशुक्ल सप्तमी २०१९

मोदफलपुरम्

# एतद्ग्रन्थप्रकाशने आर्थिकसाहाय्य-
# दातॄणां नामानि

(१) भारतरत्नं डा० राजेन्द्रप्रसादः ( भूतपूर्वराष्ट्रपति )

(२) श्रीकृष्णकुमारबिड़लामहोदय' — कलकत्ता ।

(३) श्रीविपिनविहारीवर्मा ( बार एट्-लॉ ), एम्. पी , शिकारपुरम्,
चम्पारण्यम्

(४) श्रीचतुर्भुजनारायण अग्रवाल — मोतिहारी ।

(५) महन्त श्रीवनराजपुरी — सिकटा, रामनगरम्, चम्पारण्यम् ।

(६) श्रीशत्रुमर्दनशाही वर्मा — ( सभापतिः चम्पारनजिलास्वतन्त्रपार्टी
संस्थायाः) डुमरिया, चम्पारण्यम् ।

(७) श्री भुवनेश्वरप्रसाद रायः — विलासपुरम्, चम्पारण्यम् ।

(८) पण्डित श्रीललनपाण्डेयः — बहुअरी, रामनगरम्, चम्पारण्यम् ।

# एतद्ग्रन्थप्रकाशने आर्थिकसाहाय्य-

# दातृणां नामानि

(१) भारतरत्नं डा० राजेन्द्रप्रसादः ( भूतपूर्वराष्ट्रपति )

(२) श्रीकृष्णकुमारबिड्लामहोदयः—कलकत्ता ।

(३) श्रीविपिनविहारीवर्मा ( वार एट्-लॉ ), एम्. पो , शिकारपुरम्, चम्पारण्यम्

(४) श्रीचतुर्भुजनारायण अग्रवाल'—मोतिहारी ।

(५) महन्त श्रीवनराजपुरी—सिकटा, रामनगरम्, चम्पारण्यम् ।

(६) श्रीशत्रुमर्दनशाही वर्मा—( सभापतिः चम्पारनजिलास्वतन्त्रपार्टी संस्थायाः) डुमरिया, चम्पारण्यम् ।

(७) श्री भुवनेश्वरप्रसाद रायः—विलासपुरम्, चम्पारण्यम् ।

(८) पण्डित श्रीललनपाण्डेयः—वहुअरी, रामनगरम्, चम्पारण्यम् ।

श्रीगान्धिचरितमहाकाव्यस्य ——

गुभैषी

श्रेष्ठिवरश्रीघनश्यामदासविड़ला

# श्रीगान्धिचरितमहाकाव्यप्रकाशने

# कृतसुदृढसाहाय्यस्य

## श्रीविडलावंशस्य

## प्रशस्तिः ।

१

स्वर्गप्रतिच्छायमनल्पभव्यगुणालया या नगरी पिलानी
स्वाभाविक वैरमपास्य हार्दाच्छ्रिया वसन्त्या च गिरोपपन्ना ॥

राजस्थान की पिलानी नगरी सभी श्रेष्ठ गुणों का भवन और स्वर्ग-की प्रतिमूर्ति है। उस नगरी पर अनुराग के कारण अपने नैसर्गिक वैरभाव को दूर कर लक्ष्मी और सरस्वती दोनों एक साथ ही वहाँ निवास करती हैं।

२

तामध्यवात्सीन्मतिमानुदारैर्गुणैः स्वकीयैर्जगति प्रतीतः ।
श्रेष्ठी सुविद्वान् शिवशब्दपूर्वो नारायणो धर्मविदा वरिष्ठः ॥

( पहले किसी समय ) उस पिलानी मे सेठ श्री शिवनारायण दास विडला जी निवास करते थे। वे वडे ही मतिमान, विद्वान अपने उदार गुणों से ससार मे सुपरिचित एव धर्मवेत्ताओ मे सर्वोत्तम थे।

३

तस्मादभूच्छ्रीवलदेवदासो ब्रह्मेव साक्षादरविन्दनाभात् ।
मान्यः सता यो विडलान्ववायपद्माशुमाली तनयः सुधीशः ॥

जैसे साक्षात पद्मनाभ विष्णु से ( उनके नाभि-कमल पर ) ब्रह्माजी उत्पन्न हुए थे, वैसे ही उन ( सेठ श्री शिवनारायणदास विड़ला ) मे

श्री बलदेवदास बिड़ला ( पुत्र रूप से ) उत्पन्न हुए थे। वे सज्जनो मे परम माननीय हुए। उनसे बिड़ला वश उसी प्रकार विकसित हुआ, जैसे सूर्य से कमल होता है।

४

धर्मात्मना यो धनिना च मध्ये लोकेषु सर्वप्रथमं प्रगीतः।
दिव्यानि तीर्थेषु कृतानि तेन विभान्ति लक्ष्मीपतिमन्दिराणि ॥

लोगो के बीच जब कभी धर्मात्माओ और धनियो के नामो की गणना की जाती तो उन्ही ( सेठ श्री बलदेवदास बिड़ला ) का नाम आदर के साथ सर्वप्रथम गृहीत होता है। तीर्थों मे उनके बनवाये हुए लक्ष्मीनारायण के गगनचुम्बी मन्दिर अपनी दीप्ति विशेष रूप से फैलाते पाये जाते हैं।

५

विदेशगानामपि वैदिकेषु धर्म्मेषु भक्त्यादरिणा जनानाम्।
प्रीत्यै महद् वैष्णवमन्दिर यो व्यरीरचत् लन्दनराजधान्याम् ॥

विदेश जानेवाले और वेदोदित धर्मों पर अनुराग के कारण आदर और आस्था रखनेवाले लोगो की प्रसन्नता के लिए उन्होने इंगलैंड की राजधानी लदन नगरी मे विशाल विष्णु मन्दिर का निर्माण कराया है।

६

काश्या लसत्सुरसरित्पुलिनेऽतिरम्ये वेदाद्यनेकविधवाङ्मयवित्सुधीशैः।
विद्यार्थिभिश्च बहुभिः परिषेव्यमाण यो भारतीसदनमुल्लसित व्यधत्त ॥

काशी नगरी मे, गगा के रमणीय तट पर, आप ही ने महाविद्यालय की स्थापना की है, जिसमे वेद आदि अनेक प्रकार के वाङ्मयो के वेत्ता पण्डित एवं बहुत से विद्यार्थी रहते है।

७

दानप्रसगे 'ननु कर्ण एष जात' पुनर्भूमितले मनस्वी।"
लोकोक्तिरेषा न मृषास्ति यस्मिन् विख्यातकीर्तौ प्रथिते वदान्ये ॥

जब कभी दान की चर्चा होती तो विख्यात कीर्तिवाले और प्रख्यात दानी जिस सेठ बलदेवदास जी के विषय मे की गई यह लोकोक्ति झूठ नही ( बल्कि बिल्कुल सच ) उतरती थी कि "ये भूतल पर फिर से अवतरित साक्षात् मनस्वी कर्ण ही हैं।"

८

श्लाघ्यैः सता सर्वजनोपयुक्तैः प्रीतो गुणौघैस्त्रिदिशाधिनाथः।
योग्येन राजेति पदेन योग्य य साधुवृत्त समलचकार॥

वे परम योग्य तो थे ही उनका वर्ताव भी अत्यन्त उत्तम था। उनके गुण ऐसे थे, जिनके लिये बड़े बड़े लोग भी ललकते थे। और वे अपने गुणो का उपयोग प्राचीन राजाओं की तरह जनहित के कार्यो मे करते थे। इसीलिये ब्रिटेन के बादशाह ने उनके उन गुणो पर मुग्ध होकर "राजा" की योग्य पदवी स उन्हे अलंकृत किया था।

९

चत्वार आसन्तनया. सुकीर्तेर्गुणोदधेश्चन्द्र समा गुणाढ्या।
सितीकृतो यैरधुनास्य भासा दिवानिश भाति समस्तलोकः॥

उत्तम कीर्तिवाले और गुण के समुद्र उन राजा बलदेवदासजी के गुणियों मे श्रेष्ठ चन्द्रमा के समान चार पुत्र उत्पन्न हुए। इन चारो पुत्रो के मुखचन्द्र की चॉदनी से उज्ज्वल किये गये सभी लोक अब भी रातदिन चमकते रहते है।

१०

सौम्याननाः सद्विनयावनम्रा मेधाविन. सस्मितपूर्ववाच।
आसन् चतुर्वर्गसमा इवामी योग्येषु कृत्येषु कृतप्रकाशाः॥

इनके चारो पुत्रो के मुख पर सौम्यता झलकती रहती है। सज्जनो के प्रति विनय के कारण ये परम नम्र रहते है। ये परम मेधावी ( किसी भी बात को शीघ्र ही पकड़ लेनेवाली बुद्धि से युक्त ) और मुस्कान से भरी वाणी बोलने वाले है। इनके करने योग्य जितने कर्म है, उन पर इनके

तेज का प्रकाश सदा ही छिटकता रहता है। अतः धर्म, अर्थ, काम और मोक्ष इन चार वर्गों के समान ही पिता के ये चारो पुत्र हुए हैं।

११

अथ युगलकिशोरेत्याख्यया सुप्रसिद्धे
जगति सकलभ्रातृष्वग्रजो धर्ममूर्तिः।
प्रतिदिनकृतदानप्रक्रियासम्प्रवाहैः
लघयति खलु लोके लोकपालं कुबेरम्॥

सब भाइयों मे बड़े, धर्ममूर्ति श्रीयुगलकिशोर बिड़ला संसार मे बड़े ही प्रसिद्ध पुरुष हैं। वे अपने प्रतिदिन किये जाने वाले दान के प्रवाह में लोकपाल कुबेर तक को ( तिनका जैसा ) हलका बना देते हैं। ( अर्थात् जैसे जल का प्रवाह तिनके को बहा ले जाता है वैसे ही कुबेर भी उनके दान के प्रवाह मे बह से गये। )

१२

छात्राननाथान् भ्रमतो निराशान् चेखिद्यमानान् करुणैकमूर्तिः।
प्राध्येतुकामानपि वृत्तिदानादध्यापयन् यः कुरुतेऽर्थयुक्तान्॥

श्रीयुगलकिशोरदासजी साक्षात् करुणा की ही मूर्ति हैं। वे उन अनाथ छात्रो के लिए जो पढ़ना तो चाहते थे, किन्तु अर्थ के अभाव मे निराश होकर इधर उधर भटकते होते अथवा अतिशय कष्टों का सामना करते होते उन्हे वृत्ति की व्यवस्था करके पढवाते हैं। इस प्रकार वे उन्हे सफल मनोरथ बनाते हैं।

१३

भव्यं महद् भारतराजधान्या पुरीन्द्रप्रस्थेऽद्भुतरामणीयम्।
लक्ष्मीपतेर्मन्दिरमद्वितीय निर्मापितं येन कलाभिरामम्॥

आपने ( श्रीयुगलकिशोरदासजी ने ) भारत की राजधानी दिल्ली नगरी में एक सुन्दर, विशाल, अद्भुत रमणीयता युक्त एवं अद्वितीय कला पूर्ण श्री लक्ष्मीनारायण जी का मन्दिर बनवाया है।

१४

व्रजेस्थिवृन्दावनमस्यकीर्तिः कलिन्दजायाः पुलिनेऽतिरम्ये ।
भ्राजत्सुश्रृङ्गाटकचारुश्रृङ्ग राधापतेर्मन्दिरमस्ति पुण्यम् ॥

व्रज ग्राम मे श्रीवृन्दावन के भीतर यमुना जी के अति रमणीय तट पर राधापति भगवान श्रीकृष्ण का परम पावन मन्दिर जो कि चमकते चौराहों और सुन्दर श्रृङ्गो से युक्त हैं, आपकी ही उज्ज्वल कीर्ति है।

१५

श्रीविश्वेश्वरमन्दिरं सुरुचिरं काश्या विशालं नवं
भक्त्या दर्शनकारिणा जनिमता लभ्यावकाशं सदा
आर्यप्राक्तनसंस्कृते. सुशरणं गङ्गाम्भसा क्षालित
येनाकारि सुघोषित श्रुतिविदा सामर्ग्यजुःसुस्तवैः ।

काशीपुरी मे (हिन्दू विश्वविद्यालय के प्रागण मे) श्रीविश्वनाथजी के एक नवीन और विशाल सुन्दर मन्दिर का निर्माण आपने ही कराया है। यह मन्दिर आर्यों की पुरानी संस्कृति की शरण है। गङ्गा की नहर अपने जल से इस मन्दिर को धोती रहती है। इसमे भक्ति भाव से दर्शन पाने के इच्छुक बहुत अधिक जनो के लिए एक साथ ही दर्शन प्राप्त करने योग्य पर्याप्त स्थान सुलभ है। यह मन्दिर वैदिको के ऋक्, साम और यजुर्वेदो की उत्तम स्तुतियों से सदा ही घोषित रहता है।

१६

प्रवासिनामाश्रयमिच्छता य: कर्तुं निवास कृतसुव्यवस्थाम्
उद्यानरम्यामथ धर्मशालामकल्पयल्लोकहिताय धीमान् ।

और, आपने लोकहित की भावना से टिकने के लिए स्थान की खोज करने वाले परदेशियो को टिकाने के लिए ऐसी धर्मशाला बनवा दी है, जहाँ यात्रियो के सुख-सुविधा की बहुत ही सुदर व्यवस्था है। उसमे उद्यान के होने से उसकी शोभा देखते ही बनती है।

१७

सनातनं रक्षितुमेव धर्मं गृहीतदेहः प्रतिभाति योऽयम् ।
तीर्थेष्वतानीन नवमन्दिराणि धर्मोपदेशस्य च सुव्यवस्थाम् ॥

ऐसा जान पड़ता है कि आप सनातन धर्म की रक्षा करने के लिए ही शरीर धारण किये हुए है। तभी तो आपने तीर्थों मे नये नये मन्दिर बनवाये है, और उनमे धर्मोपदेश की सुंदर व्यवस्था कराई है।

१८

ततो द्वितीयो विदुषा वरेण्यो धीराग्रणी श्रेष्ठिकुलावतंस. ।
जातो मनस्वी गुणवानुदारो रामेश्वराह्वो निपुणोऽर्थशास्त्रे ॥

उनसे छोटे श्रीरामेश्वरदासजी बिड़ला उत्पन्न हुए है। आप जैसे ही विद्वानो मे श्रेष्ठ है, वैसे ही धीर जनों के अगुआ भी हैं। सेठ शिव नारायण दास जी के वश के तो आप आभूषण ही हैं। आप स्वय मनस्वी उत्तम गुणो से युक्त और उदार होते हुए अर्थशास्त्र के बहुत बड़े जानकार भी है।

१९

अमून्महात्मन्यतुलादरेण सुभक्तिमान् विश्वगुरौ च यो वा ।
श्रीमालवीये जगतो वरिष्ठे स्वदेशसेवाभिरतो मनीषी ॥

अनुपम आदर के साथ महात्मा गान्धी मे तथा विश्व के गुरु और जगत मे वरिष्ठ श्री मालवीय जी मे आप की उत्तम भक्ति थी। अपने देश की सेवा मे लगे हुए आप मनीषी है।

२०

सम्मानिता नेतृगणा अनेन प्राज्यैर्धनैर्देशसुनिघ्नतार्थम् ।
योलोकसेवाविनियोगमेव महोपयोग मनुतेऽर्थराशेः ॥

अपने देश की स्वाधीनता के लिए आपने प्रचुर धन के द्वारा नेताओ को सम्मानित किया है। लोक सेवा मे धन का व्यय करना ही आप उसका सबसे बड़ा उपयोग मानते हैं।

२१

समुन्नतेः कारणमौलिभूते यो देशसेवाऽव्यवसायवृद्धी ।
मत्वाथ तत्राभिरताविपश्चिल्लोकैस्तु सर्वैः परिगीतकीर्ति ॥

समुन्नति का सर्वश्रेष्ठ कारण देश सेवा और व्यवसाय वृद्धि को मान कर आप उनमे लगे रहते हैं। अत समस्त जनता द्वारा आप के यश का गान किया गया है।

२२

तस्याथ राज्ञस्तनयस्तृतीयो गुणोदधेः पूर्णकलः शशीव ।
नाम्ना घनश्याम इति प्रसिद्ध प्रमोदयन् स्वाचरितैर्जनौघान् ॥

इनके बाद तीसरे पुत्र श्रीघनश्यामदास बिडला उत्पन्न हुए। जैसे समुद्र से सम्पूर्ण कलाओ से युक्त चन्द्रमा उत्पन्न हुआ था, वैसे ही गुणो के समुद्र श्रीबलदेवदासजी से ये अपने सौम्य आचरणो से जनता को आह्लादित करते हुए उत्पन्न हुए।

२३

स्वाध्यायसंलग्नमनाः स्वकीयबाल्येऽपि सज्ज्ञानविवेकपूर्ण ।
यो धारणासत्प्रतिभोपपन्नो मनस्विवर्यः कुशलः क्रियासु ॥

श्रीघनश्यामदासजी का मन स्वाध्याय मे सतत लगा रहा, इससे अपने बचपन में ही वे उत्तम ज्ञान और भले बुरे के विवेक से पूर्ण हो गये थे। फलतः धारणा और उत्तम प्रतिभा से प्राप्त मनस्विता मे उन्हे कार्य मे कुशलता मिली है।

२४

अनेकविद्यासु कृतश्रमः सन् भाषासु मुख्यासु च सप्रवीण ।
स्वल्पेन कालेन सुधीश्वराणामग्रेसरोऽभूद्यशसा परीत ॥

अनेक विद्याओ मे इन्होने जो श्रम किया है, इससे ये देश विदेश की मुख्य भाषाओ मे अच्छी तरह प्रवीण बन गये है। बहुत थोड़े ही समय

मे ये यश के साथ ही साथ बड़े बड़े विद्वानो के बीच प्रथम स्थान प्राप्त करने वाले भी हो गये हैं ।

२५

योराजनीतौ सुतरा प्रवीणस्तथार्थशास्त्रे निपुणः कृतीशः ।
वाग्मी सता मानयिता च मान्यः शान्तो महान् धीरतमोऽस्ति लोके ॥

ये राजनीति मे पण्डित, अर्थशास्त्र मे निपुण, कृती लोगो मे श्रेष्ठ, अच्छे वक्ता और सज्जनो के सम्मान करने वाले हैं। जनता भी इनका आदर करती है। फलतः लोक मे ये शान्त, महान और अतिशय धीर माने जाते हैं।

२६

द्वीपान्तरीयैः सह भारतस्थो वाणिज्यसम्बन्धमकल्पयद्यः ।
सेवा च देशस्य ययोत्तमा भूत्समुन्नतिविस्मयकारिणी च ॥

भारत मे रहते हुए आपने विदेशियो के साथ व्यापार का सम्बन्ध स्थापित किया। इससे ( व्यापार सम्बन्ध के स्थापित किये जाने से ) देश की तो उत्तम सेवा हुई ही, आश्चर्यजनक समुन्नति भो हुई।

२७

भक्त्या च गाम्भीर्यसुयोग्यताभ्या स्वदेशसेवाव्रतसप्रवृत्त्या ।
अभूत्स्फुरत्संप्रतिपन्नबुद्ध्या महात्मनः स्नेहसुधासुपात्रम् ॥

अपनी भक्ति, गम्भीरता, उत्तम योग्यता, अपने देश की सेवा के लिए व्रत की लगन, और फड़कती हुई प्रतिपन्न बुद्धि के कारण ये महात्मा गाधी की स्नेहसुधा के उत्तम पात्र बन गये थे।

२८

श्रीमालवीयोऽपि जगद्गुरुर्यं गुणैरमीभिः परिमण्डिताङ्गम् ।
मेने सदा सर्वजनोपकारक्रियाप्रवृत्त हृदयं स्वमेव ॥

जगत के गुरु श्रीमालवीय महाराज भी इनके उन्हीं ( पूर्वोक्त ) गुणों

से भूषित होने से इन्हें सदा समस्त जनता के उपकार कार्य में लगा हुआ अपना हृदय ही मानते थे।

२९

यदीयगेह किल नेतृवर्गस्त्वेव प्रशस्तं समभूत्तदानीम्।
स्वतन्त्रतान्दोलनयुद्धकाले कर्तुं च पारस्परिकं विमर्शम्॥

उन दिनों, जब कि स्वतन्त्रता प्राप्ति के लिए संघर्ष छिड़ा हुआ था, पारस्परिक मन्त्रणाओं के लिये आपका गृह नेताओं के मिलने जुलने का एक उत्तम स्थान माना जाता था।

३०

स्वतन्त्रतान्दोलनसम्पराये प्रवृत्तलोकान् सह नेतृवर्गान्।
प्राज्यैर्धनैर्यः सतत सिषेवे राणाप्रताप हि पुरेव भामाः।

स्वतन्त्रता आन्दोलन सम्बन्धी लडाई में जो जनता लगी हुई थी अथवा जो नेतागण लगे हुए थे, उन सभी की आप ने प्रचुर धन से सेवा की है। जैसे पहले मुगलो के साथ युद्ध के समय प्रचुर धन द्वारा महाराणा प्रताप की सेवा भामा साहु ने की थी।

३१

आजीवन राष्ट्रपिता यदीय सद्माध्यवात्सीद्रुचिर महात्मा।
सपूज्यमान परया सुभक्त्या तदुत्तम सम्प्रति तीर्थमास्ते॥

राष्ट्रपिता महात्मा गांधीजी ( स्वतन्त्रता प्राप्ति के बाद से ) जीवन के अन्तिम क्षणों तक आप ही के दिल्लीवाले सुन्दर एव विशाल भवन में आपकी परम भक्ति से पूजित होते हुए निवास किये थे। वह उत्तम भवन आज तीर्थ स्थान है।

३२

स वल्लभो नीतिमता महिष्ठो यमात्मबन्धु बुबुधे स्वभिन्नम्।
यश्चासकृत् समदि लब्धकीर्तिर्जात' सदस्यो बहुमानपूर्वम्॥

राजनीतिज्ञों मे अतिशय महान श्रीवल्लभभाई पटेल आपको अपना अभिन्न मित्र मानते थे। आप ससम्मान अनेक वार संसद् के सदस्य बनाये गये थे जहाँ आपने पूर्ण यश प्राप्त किया था।

३३

यः साम्प्रतं राष्ट्रपतेः प्रसादं सम्मानपूर्वं लभते कृतीशः।
यं चानिशं साधुमतिं प्रधानमन्त्री स्वबन्धुं मनुते गुणज्ञः॥

वर्तमान समय मे राष्ट्रपति की सम्मान सहित प्रसन्नता आपने प्राप्त की है क्योकि आप कृतियो मे श्रेष्ठ जो ठहरे। देश के प्रधानमन्त्री श्रीनेहरूजी गुणियो के पारखी हैं, साधुमतिवाले आपको अपना ही मानते हैं।

३४

गुरुः प्रवाहे वचसा मनस्वी गम्भीरतायामुदधिर्महाद्रिः।
स्थैर्ये शिविः सर्वजनोपकारे योऽभूद्यशःपूरितसर्वलोकः॥

वाणी की धारा को प्रवाहित करने मे आप साक्षात् महान पण्डित बृहस्पति ही हैं। आप की गम्भीरता देख कर आप को समुद्र ही मानना पड़ता है। आप की स्थिरता ऐसी है कि आप उत्तुङ्गकाय भूधर जान पडते हैं। समस्त जनता के उपकार करने मे आप महाराजा शिवि ही हैं। इस प्रकार आपने अपने यश से लोको को भर दिया है।

३५

यत्कीर्तिचन्द्रो दिवसे दिनेशसम्पर्कमेत्याप्यतुलप्रकाशः।
सितीकृतो येन विलक्षणेन दिवानिशं भाति समग्रलोकः॥

आपके कीर्ति चन्द्र का प्रकाश दिन मे दिनेश के संपर्क को पाकर अपनी सानी नही रखता है। आपकी कीर्ति के उस विलक्षण चन्द्रमा द्वारा उज्ज्वल किए गए सभी लोक दिन और रात चमचमाते रहते हैं।

३६

यद्देशसेवाप्रणयो नितान्तं श्लाघ्यः सतां प्रीतिकरः शशीव :
धर्मस्य वा स्वीयसुसस्कृतेश्च त्यागो हि रक्षार्थमहो महीयान् ॥

देश की सेवा मे आपका प्रेम नितान्त श्लाघनीय है। चन्द्रमा के समान सज्जनो का आह्लादक भी है। धर्म और अपनी उत्तम सस्कृति की रक्षा के लिए आपका त्याग अतिशय महान् है।

३७

स्वजन्मभूमौ पुरि यः पिलान्या योग्यैरुपाध्यायगणैरुपेतम्।
शिष्यैश्च संस्थापितवान् सुविद्यापीठं हि सर्वागमसविभागम् ॥

आपने अपनी जन्मभूमि पिलानी मे अपने-अपने विषयो मे सुयोग्य अध्यापको एवं शिष्यो से सेवित सुदर विद्यापीठ की स्थापना की है, जिसमे प्रत्येक शास्त्र का अलग अलग विभाग खोला गया है।

३

तस्यानुजः सौम्यगुणाकरोऽभूद्वपुःप्रभानिर्जितमन्मथश्रीः।
वाचा सुधाभावितयेव लोकानन्दप्रदो यो बृजमोहनाख्यः ॥

श्रीघनश्यामदासजी के अनुज श्रीबृजमोहनदासजी बिड़ला है। आप भी सौम्य गुणों के आकार ही है। आप के शरीर की शोभा से कामदेव की शोभा हार मानती है। अपनी अमृतमयी वाणी से आप लोगों को आनन्द के देने वाले हैं।

३९

वाग्देवता यस्य मुखारविन्दे कृताधिवासेव विभाति भव्या।
प्रज्ञावता संसदि लब्धकीतिर्योऽयं गुणैः स्वैः सुधियोऽधिशेते ॥

ऐसा जान पडता है कि आपके मुखकमल में निवास करती हुई सरस्वती अपनी दीप्ति फैला रही है। विद्वानो के समाज में आपने पर्याप्त यश अर्जन किया है। अथवा आप अपने गुणों द्वारा विद्वानो मे रमते है।

४०

मनस्विता सद्विनयोपपन्ना सत्येन साकं मधुरा च वाणी।
ज्ञानं विवेकेन सहास्ति यस्मिन् त्यागाय सर्वार्थपरिग्रहोऽपि ॥

आपमे रहनेवाला जो पांडित्य है, वह सज्जनों के प्रति विनय से युक्त है। आप की मीठी वाणी सत्य का साथ नही छोड़ती है। आप का ज्ञान विवेक के साथ साथ उद्भासित रहता है। सब प्रकार के अर्थों का जो आप अर्जन करते हैं, वह त्याग के लिये ही करते हैं।

४१

यो राजनीतौ निखिलेऽर्थशास्त्रे निगूढतत्त्वं परमं रहस्यम्।
संवेदयन् सर्वसुधीगणानां महोपकारं सततं विधत्ते ॥

आप राजनीति किंवा सम्पूर्ण अर्थशास्त्र मे वर्तमान परम रहस्य को, जिसकी यथार्थता किसी पर प्रकट नही है, खोल कर रख देते हैं। इस प्रकार पण्डित वर्ग का आप सतत महान् उपकार करते हैं।

४२

उद्योगिनां यो भुवि कर्मठानां मेधाविनां ज्ञानवतां मतां च।
आदर्शभूतः परिणामबुद्धिः स्वदेशसेवाव्रतिनां वरीयान् ॥

आप इस धरती पर कर्मठ उद्योगियो एवं मेधा तथा ज्ञान से सम्पन्न महापुरुषो मे आदर्श स्वरूप हैं। आपकी बुद्धि परिणामदर्शिनी है। जो लोग स्वदेशसेवा के व्रती हैं, उनमे आप श्रेष्ठ हैं।

४३

यः स्वीयकीर्तिव्रजचारुचन्द्रमरीचिभिः स्वं कुलकैरवं तत्।
विभास्यमानं कुरुते विपश्चिद्द्विरेफवृन्दैरुपसेव्यमानम् ॥

जैसे चन्द्रमा अपनी मनोहर किरणो से कुमुद को विभासित करता है और भौंरे उसके ( कुमुद के ) निकट जुड़ कर उसकी सेवा करते हैं वैसे ही आप भी अपने कुल को विभासित करते है। और विद्वानो का समुदाय आप के आश्रय मे आकर आनन्द अनुभव करता है।

४४

तत' सुधीशौ विविधागमज्ञौ सुबुद्धिमन्तौ गुणिनामुदारौ ।
स्वदेशसेवोन्नतिमार्गविज्ञौ रामेश्वरीयौ तनयावभूताम् ॥

अनन्तर श्रीरामेश्वरदासजी के श्रेष्ठ विद्वान अनेक शास्त्रों के जानकार, उत्तमबुद्धि वाले, गुणियों में उदार कहे जाने वाले अपने देश की सेवा और उन्नति के मार्ग के पूरे जानकार दो लड़के उत्पन्न हुए।

४५

श्रीमाधवस्तत्र गिरा च कान्त्या श्रिया विभूत्या महितः सुमेधाः ।
धीरोऽर्थशास्त्रस्य च राजनीते रहस्यवेदी प्रथितो जगत्याम् ॥

इन दोनों में प्रथम श्रीमाधवदास विडला इस नाम से संसार मे प्रसिद्ध हुए हैं। आप अपनी वाणी, कान्ति, श्री और उत्तम विभूति से सबके आदर के पात्र हुए हैं। आपकी मेधा शक्ति सराहनीय है। आप बड़े धीर और अर्थशास्त्र एवं राजनीति के रहस्यों के जानकार भी हैं।

४६

तर्कैः स्वकीयैरथ तथ्यभूतै' परोक्तिमातङ्गररिर्वलोयान् ।
भूत्वापि वाग्भिर्ननु सूनृताभि' समस्तलोकप्रियता प्रयातः ॥

यद्यपि आपके अकाट्य तथ्यभूत तर्क उसी प्रकार दूसरों की उक्तियों को चीर फाड कर रख देते है जैसे सिंह हाथी के मस्तक को तो भी आप अपनी मीठी बोली के कारण सब लोगों के प्रिय बन चुके है।

४७

गजाननोऽन्यो गणपप्रसादात् जातस्तदंशादिव दिव्यमूर्तिः ।
श्लाघ्यैर्जनानन्दकरैरुपेतो गुणैः स्वकीयैर्यशसावदातः ॥

ऐसा जान पडता है कि गणेशजी के प्रसाद से दिव्य मूर्तिवाले गजाननदासजी विड़ला माधवदासजी के अनुजरूप में गणेशजी के अंश

से ही उत्पन्न हुए हैं। आप जनता को आनन्दित बनानेवाले सराहनीय गुणों से युक्त होते हुए अपनी कीर्तियों से अवदात हैं।

४८

ज्यायान् घनश्यामसुत स्फुरद्धीरभूत्सुकीर्तिः स्वपितेव सौम्यः।
लक्ष्मीनिवासेत्यभिधो जगत्यामन्वर्थनामा मतिमान् गुणज्ञ॥

श्रीघनश्यामदासजी के बड़े लड़के का लौकिक नाम अर्थानुसार ही "लक्ष्मीनिवास" ऐसा निश्चित हुआ था। आप मे फड़कती हुई बुद्धि, उत्तम कीर्ति और अपने पिता की भाँति सौम्य स्वभाव तो हैं ही, आप स्वयं मतिमान होते हुए गुण की पहचान करनेवाले भी हैं।

४९

भाषान्तरारण्यचरो मृगेन्द्रो विद्यासुधाम्भोनिधिपारगामी।
सहार्थशास्त्रेण च राजनीतौ परं प्रवीणः कुशलः क्रियासु॥

श्री लक्ष्मीनिवासजी भिन्न-भिन्न भाषाओं में उसी प्रकार विचरण करते हैं जैसे विभिन्न अरण्यों में मृगेन्द्र विचरता रहता है। विद्यारूपी अमृत के समुद्र के पार तक को वे देखे हुए हैं। अर्थशास्त्र के साथ राजनीति में परम प्रवीण होते हुए वे बड़े ही कर्मठ भी हैं।

५०

कुलोचिताचारविधानदक्षः परोपकारप्रणयी विनम्रः।
स्वदेशसेवाव्रतशुद्धभावः शिक्षाविकासार्थकृतप्रचार॥

आप अपने कुल के योग्य आचरण और नियम में दक्ष होते हुए परोपकार के प्रेमी, विनम्र, स्वदेशसेवा के व्रत में पवित्र भाववाले और शिक्षा के विकास के लिए समुचित प्रचार कर चुकनेवाले हैं।

५१

जातो गुणानां भुवि दुर्लभाना पात्र द्वितीयोऽथ सुतो यशस्वी।
महामतिः कृष्णकुमारनामा गृह्णन् स्वकान्त्या नररत्नलक्ष्म॥

उनके ( श्रीघनश्यामदासजी के ) दूसरे यशस्वी पुत्र धरती पर दुर्लभ गुणों के पात्र उत्पन्न हुए हैं। उन महामति का नाम श्रीकृष्णकुमार बिड़ला है। उनके शरीर की कान्ति ऐसी है कि उनमें उत्तम मनुष्यों के सभी लक्षण पाये जाते हैं।

५२

मेधाविना ज्ञानवता वरेण्य आदर्शभूतः परिणामबुद्धिः।
स्वदेशसेवाव्रतिना वरीयानगाधधीः सत्प्रतिभोपपन्नः॥

श्री कृष्णकुमार बिड़ला मेधा और ज्ञान से सम्पन्न व्यक्तियों में उत्तम माने गये हैं। ये ( भारत के तरुणो के ) आदर्श स्वरूप हैं। इनकी बुद्धि सदा परिणाम की ओर लगी रहती है। अपने देश की सेवा का व्रत लेने वाले व्यक्तियों में आप सर्वोत्तम हैं। आप ऐसी उत्तम प्रतिभा से सम्पन्न हैं कि आपकी बुद्धि अथाह जान पड़ती है।

५३

यः सूनृत सर्वजन प्रकृत्या ब्रूते च गम्भीरतया महाब्धिः।
तत्त्वार्थदृष्टौ च समस्तविद्वद्वृन्द स्वमत्या पर्यातिशेते॥

चाहे कोई भी हो लेकिन श्री कृष्णकुमारजी उससे जब बात करते हैं, तब स्वभाव ही से मधुर वचन ही बोलते हैं। आप में इतनी गम्भीरता हैं कि उसके होते आप महासमुद्र जान पड़ते हैं। आपकी सूक्ष्म मति तत्त्वार्थ के समझने मे समस्त विद्वत्समाज से बढ़ी चढ़ी है।

५४

रत्नाकर इवैतस्मिन् वंशे सद्गुणभूषिता।
रत्नवत् सन्ततिः सर्वा दिङ्मात्रमुदितम्मया॥

यह बिड़ला वंश रत्नाकर के समान है। इस वंश की सम्पूर्ण सतति सद्गुणों से भूषित एव रत्नतुल्य है। यहाँ उन सबका विस्तार से वर्णन न कर थोड़े में ही किया गया है।

॥ शुभम् ॥

# समर्पण-पत्रम्

स्वनामधन्यदानवीरश्रेष्ठिप्रवरश्रीघनश्यामदासविड़लात्मज-
श्रीकृष्णकुमारविड़लामहोदयस्य मङ्गलमयकर-
कमलयोरिदं गान्धिचरितमहाकाव्यं
सस्नेहं समर्प्यते ।

नरकटियागञ्जम्,
वसन्तपञ्चमी
सं० २०१९ वि०

तदीयशुभैषिणा
साधुशरणशर्ममिश्रेण

# श्रीगान्धिचरितम्

## [ प्रथमः सर्गः ]

यस्याङ्घ्रिस्मरणं विघ्नव्रातध्वान्तदिवाकरः ।
हेरम्बः सिद्धिसदनः प्रीतः कामान्स वर्षतात् ॥१

नमः परमकल्याणसन्दोहामृतवर्षिणे ।
श्रीमद्गान्धिपदद्वन्द्वराजीवाय सुशर्मणे ॥२

यत्स्नेहकारुण्यसुधाभिषेको मलीमसं मे हृदयं विशुद्धम् ।
चकार तौ साम्बशिवोपमानौ प्रेम्णा च भक्त्या पितरौ नतोऽस्मि ॥३

यदीयपादाम्बुजमेत्य जाताः शिष्याः सुमन्दा अपि कोविदेन्द्राः ।
विश्वेश्वरं तौ शिवबालकं च वन्दे गुरू तौ करुणैकमूर्ती ॥४

महात्मनः क्वातिमहच्चरित्रमगाधसिन्धूपममद्वितीयम् ।
क्वाऽहं भृशं मन्दमतिर्न गन्तुं तत्पारमीशोऽस्य विना कृपाभिः[1] ॥५

सत्यव्रतं[2] सत्यमभूद् यदीयं सर्वेष्वहिंसात्मकमेकरूपम् ।
यज्ज्ञानराशिः सवितेव लोकप्रकाशकोऽसौ जयतान्महात्मा[3] ॥६

न यस्य शत्रुर्न च मित्रमेव समस्य सर्वत्र विशुद्धबुद्धेः ।
लोकोपकारव्रतिनो न तस्य ततोऽतिरिक्तं किमपि स्वमिष्टम् ॥७

---

१—कृपाभिरित्यत्र बहुत्व कृपागतानेकत्वप्रदर्शनार्थम् ।
२—सत्यव्रतमिति–सत्यस्य व्रत सत्यव्रत तत्सत्यमभूदिति भावः ।
३—सर्वत्र प्रसिद्धया महात्मेति पदेन भगवतो गान्धेर्ग्रहणम् ।

सदा सदाचारसमर्थकस्य कदा कदाचारनिषेधनं न ।
मन्ये स मित्रं च रिपुस्तदीयौ यौ तत्सदाचारकृतौ[1] भवेताम् ॥८

अनन्तगाम्भीर्यदयासमुद्रे यस्मिँस्त्रिलोकी सकला ममज्ज[2] ।
अभूदसौ कोऽपि जनो न तत्र लब्धावकाशो नितरां न रेजे ॥९

यो लोकसेवाव्रतमेव धर्मं सारं श्रुतीनां सममंस्त नित्यम् ।
स्वयं तथा कर्तुमभिप्रवृत्तः स दीनबन्धुर्जयतान्मुनीन्द्रः ॥१०

शान्तिर्मनस्येव न यस्य शुद्धे सुधामयी वाच्यपि शोभते सा ।
वपुर्हि नो भूतभवं च साक्षात् शान्तिः परा सोऽवतु नो महात्मा ॥११

क्षमा धरित्र्या इव साधुवृत्तेरभूद्धि भूभृद्गणवन्दिताऽस्य[3] ।
सिन्धोरिवान्तः पयसीव[4] वह्नेस्तस्मिन् क्रुधोनात्मगतिः कदापि[5] ॥१२

विश्वं समुत्पाद्य तदीयरक्षाभरं बभार स्वयमेव धाता ।
यदा भवत्यत्र तदव्यवस्था तदाभिगृह्णाति तनुं तदर्थम् ॥१३

---

१—सदाचारकृतौ इत्यत्र कृन्तति करोत्योस्तुल्य रूपम् ।

२—यस्मिन्महात्मनि इति शेषः । ममज्ज इति परोक्षे लिट् । परोक्षत्वं च देशतः कालतश्च भवति । अत्र देशव्यवधाने परोक्षत्वम् । एवमेव अन्यत्राप्यूह्यम् ।

३—भूभृद्गणैः राजभिः पर्वतैश्च वन्दितेति ।

४—अन्तःपयसि इत्यत्र "अव्ययं विभक्ति" इति सूत्रेण अन्तः शब्देनाव्ययेन विभक्त्यर्थे समासः ।

५—यथाग्निः स्वमग्नित्वरूपं विहायैव जलान्तः प्रविशति तथा क्रुधोऽपि तदन्तः प्रवेशे स्व रूपं विहाय शान्तरूपाश्रयणम् इति भावः ।

विलोक्य[1] हिंसाभिरुचिं जनानां सर्वत्र मिथ्याव्यवसायवृत्तिम् ।
प्रतारणाश्चातिबलैः समन्ताद् विमर्द्यमानानपि हीनसत्त्वान् ॥१४

क्षुधा विशुष्यद्वदनान् जनांश्च प्रक्षीणकायान् स्थतः शिशूँश्च ।
विवाससः स्त्रीर्धनिभिश्च निःस्वानभ्यर्दितान् क्वापि च दीनवृत्तान् ॥

चिरञ्च तद्भारतवर्षमित्थं वैदेशिकाधीनमसह्यपीडम् ।
विलुण्ठितं स्वार्थिभिरामिषस्य पिण्डं यथा हिंस्रगणैः[2] प्रकामम् ॥

इत्थं प्रजानां कदनं समन्ताद् गवां विघातञ्च सतीत्वलोपम् ।
अधर्मराज्यं विततं पृथिव्यां तद् रक्षितुं चिन्तितवान् विधाता ॥१७

सतां च[3] धर्मस्य च रक्षणार्थं युगे युगे मे तनुधारणं वै ।
इति प्रतिज्ञा नु कृता मया सा तया विधातुं समयोऽधुनायम् ॥१८

ततो विभुर्दिव्यदृशा विमृश्य स्थानं तदर्हं मनसा स्वयम्भूः ।
महीतले सोऽवतरीतुकामो विनिश्चितं गुर्जरमेव चक्रे ॥१९

पुरा हरिर्यत्र सुभक्तवर्यं त्यागैकमूर्तिं तपसि प्रवृत्तम् ।
दिवीव शक्रं पुरि सम्पदाढ्यं धीरं सुदामानमथाभ्यषिञ्चत् ॥२०

---

१—विलोक्येत्यत्र अग्रिमश्लोकस्य क्षुधाविशुष्यद्वदनेत्यादीना चकारेणानुकर्षणात् तत्रान्वयः। हीनसत्वान् दुर्बलान् विमर्द्यमानान् पीड्यमानान्।

२—हिंस्रगणै: आमिषस्य पिण्डमिव वैदेशिकैरसह्यपीडम् भारतम् विलुण्ठित विलोक्येति पूर्वेणान्वय: ।

३—सता च धर्मस्य चेत्यत्र चकारद्वय प्रत्येक रक्षणक्रियायामन्वयलाभार्थम् ।

ततो जगत्यां प्रथितं सुदामापुरीति नाम्नोत्तमतीर्थमासीत् ।
पश्चाद् विदेशागतलोकसंगात् तत् पोरपूर्व[1] किल बन्दराह्वम् ॥२१

तत्रावसत् श्रेष्ठिकुलावतंसः श्रीकर्मचन्द्रः सुगृहीतनामा ।
जगत् सितं कर्म्मभिरस्य जातं नामाहुरन्वर्थमतो नु लोकाः ॥२२

स राजकोटाधिपतेरमात्यपदे वृतो नीतिमतां वरिष्ठः ।
यदीयहस्ते नृपतिः स्वराज्यभारं समर्प्याथ सुखी बभूव ॥२३

पत्न्यस्य नीलाम्बुजचारुनेत्रा शुचिस्मिता शीलवतीषु धन्या ।
पतिव्रता मूर्तिमतीव लक्ष्मीर्भर्तुः प्रिया प्रेमनिधिर्[2]बभूव ॥२४

समृद्धमूर्जस्वलमात्मतेजो वोढुं समर्था पतिदेवता सा ।
गङ्गे व शम्भोरिति विश्वरूपः स्वांशेन तत्रावतरीतुमैषीत् ॥२५

भर्त्राहितं साथ दधार देवी पूतात्मना संभृतमिद्धतेजः ।
पूर्वा हरित् चन्द्रमिवाद्वितीयम्[3] लोकान्[4] सदा दर्शयितु स्वमार्गान् ॥

उदीयमानेन यथेन्दुना द्यौरुषोरुणांशुप्रभया यथैन्द्री ।
हरित्तथा तेन रराज तन्वी गर्भेण राजत्कनकप्रभा सा ॥२७

---

१—वैदेशिकैः सुदामापुर्या पोरबन्दर इति नाम कृतम् । किलेति प्रसिद्धौ ।

२—प्रेमनिधिरिति विशेषण मातुरुपनामेति च ।

३—विलक्षणाह्लादकारित्वेन प्रसिद्धाच्चन्द्रादुत्कर्ष द्योतयितुमद्विती-येति पदोपादानम् ।

४—लोकान् सदा दर्शयितु स्वमार्गान् इत्यस्य स्वकर्तव्यमार्गोपदेशं कर्तुमिति भावः ।

ततो ग्रहैः सौम्यसितेज्यभौमैः केन्द्र[1]स्थितैर्भाग्यवतां वरेण्यम् ।
सुखेन साध्वी सुषुवेऽर्कबन्धुं[2] मायेव[3] पुत्रं जगतो हिताय ॥२८

तस्मिन्महात्मन्यथ जायमाने मनः प्रसादोऽसुभृतां बभूव ।
आकाशगङ्गासलिलोपसिक्तो ववौ सुगन्धिः पवनस्तदानीम् ॥२९

बाण[4]त्रिनन्देन्दुसुविक्रमाब्दे मास्याश्विने विष्णुतिथौ च कृष्णे ।
सूर्योदये भानुरिव द्वितीयो जज्ञे कुमारो जगतां सुखाय ॥३०

सा वीक्ष्य जातं वपुषः प्रभाभिर्विभासयन्तं जनुषो निकेतम् ।
पद्मेक्षणं तं स्पृहणीयशोभं ननन्द मेने स्वमथो कृतार्थम् ॥३१

अयं सुजन्मा जगतां शिवाय लोकस्य दुःख शमयेदवश्यम् ।
इति प्रहृष्टा ववृषुः सुरास्ते पुष्पाण्यदृश्या नभसः प्रकामम् ॥३२

पुत्रोऽजनिष्टेत्यमृतायमानां निशम्य गामर्थपतिर्जनोक्ताम् ।
विवेद किञ्चिन्न तदा बुबोध चिरान्महानन्दरसाभिमग्नः ॥३३

सुधोपमं श्रावयते जनाय प्रियं सुतस्याथ जनुस्तदानीम् ।
जायां सुतं स्वञ्च वपुर्विहाय नदेयमासीदिह किञ्चिदस्य ॥३४

नटाः प्रहृष्टा ननृतुर्जगुश्च तं तुष्टुवुर्वन्दिगणाः सुवाचः ।
तस्मिन्नमी तथ्यगिरो बभूवुर्न विश्वबन्धौ किमपि प्रतीपम् ॥३५

---

१—ल-च-स-दश केन्द्राः । लग्नचतुर्थ सप्तमदशमस्थानानि केन्द्रः ।

२—अर्कबन्धु भगवन्तं बुद्धदेवमित्यर्थ. ।

३—मायादेवीति बुद्धमातुर्नाम ।

४—अङ्काना वामतो गतिः—बाणः—५—त्रय.-३—नन्द -९—इन्दुः —१ एव १९३४ विक्रमाब्दे आश्विने मासे कृष्णपक्षे द्वादशीतिथौ सूर्योदये महात्मनो जन्मेति भावः ।

जानन्नजानन्नपि[1] जन्म तस्य सर्वोऽपि लोको नितरां ननन्द ।
तदोत्सवश्चान्यधियापि चक्रे हरेर्विभूतेर्महिमैवमास्ते ॥३६

यद्यप्यभूतामपरौ सुतौ प्राक् तथाप्यमुष्य प्रमदातिरेकः ।
किन्त्वस्य जन्मन्यपरैव काचित् प्रीतिस्तदानीममृतापगेव ॥३७

ततो विधिज्ञैर्विबुधैर्यथावद् विशांपतिः स्वात्मजजातकर्म[2] ।
सम्पादयामास तदाभ्रमुक्तः शशीव रेजे नितरां कुमारः ॥३८

महार्हरत्नैर्वसनादिभिश्च सम्पूज्य दैवज्ञमसौ द्विजन्मा ।
जातस्य सर्वं फलमादिशेति प्रपच्छ धीरो विनयावनम्रः ॥३९

अथ प्रहृष्टो विबुधोत्तमोऽसौ सुरेश्वराचार्य इव द्वितीयः ।
भूतं भवद् भावि फलञ्च सर्वं शिशोः क्रमेणारभताभिधातुम् ॥४०

लग्ने तुलायां जनुरस्य जातन्तत्र स्थिताः सन्तिग्रहास्त्रयोऽमी ।
कुजः कविर्ज्ञश्च शनिर्द्वितीये केतुश्चतुर्थे मदने[3] गुरुश्च ॥४१

मा[4]ने तमो लाभगतः सुधांशुः प्रान्ते रविर्व्योमचराधिनाथः ।
एवं स्थितानां निखिलग्रहाणां फलानि सर्वाणि वदन्ति तज्ज्ञाः ॥४२

---

१—तस्य सर्वात्मीयतया तज्जन्मजनितानन्दस्य सर्वत्रापि सम्भवात् ज्ञानाज्ञानाभ्यामपि तन्निमित्तकोत्सवादेरपि सम्भव इत्यभिप्रायः ।

२—स्वात्मज इति स्वस्य आत्मजः स्वात्मज इति । आत्मज शब्दस्य पुत्र पर्यायतया न पुनरुक्तिः । नात्रावयवार्थः ।

३—मदने सप्तमे ।

४—माने दशमे, लाभे—एकादशे, तमः-राहु, मदने—सप्तमे प्रान्ते —द्वादशे, व्योमचराधिनाथ.—सूर्यः ।

श्यामावदातो रुचिराननोऽयमाजानुवाहुश्च समुन्नतांसः ।
नसोन्नतः पद्मपलाशनेत्रो विशालवक्षाः सुभगोऽपराङ्गे ॥४३

व्यतीयुरेतस्य तवात्मजस्य जन्मान्यनन्तानि सहेतुकानि[1] ।
तथेदमग्रेऽपि निमित्तवन्ति[2] भावीनि नात्रास्ति च कर्महेतु[3]: ॥४४

पुरास्य नामानि भवन्ति भद्र, जन्मन्यमुष्मिन्नथ कर्मजानि[4] ।
भवेदयं सुव्रत सर्वदिव्यगुणाश्रयः सत्यरतस्तपस्वी ॥४५

लोकोपकारव्रतमेतदीयमुदेष्यतीन्दुर्नभसीव भूमौ ।
येनाशु सर्वत्र तमोऽपहत्य ज्योत्स्नेव शान्तिर्मनसोऽभिरामा ॥४६

सत्यव्रतोऽयं प्रथितो महात्मा मित्रारितुल्यो जनतानुसेवी ।
स्याद् देहिनामात्मसमः सुवन्धुः सुरद्रुमोऽकिञ्चन मानवानाम् ॥४७

विद्याश्चतस्रो[5]ऽस्य हृदि स्वतः[6] स्युर्विभासितास्साङ्गरहस्यरूपाः[7] ।
याभिर्नितान्तं हृदयेऽदसीये ज्योतिर्ज्वलेत् सूर्य इवाभिरामम् ॥४८

---

१—सहेतुकानीति-हेतु'—कारण तत्साहितानि किञ्चित्कारणमुद्दिश्येति भावः ।

२—निमित्तावन्तीति-किञ्चिन्निमित्तमादाय ।

३—कर्म हेतु-नहि कृतेन केनचित् कर्मणा प्राकृतवदस्य जन्म ।

४—कर्मजानि—लोकरक्षादिकर्महेतुकानीति भावः ।

५—विद्याश्चतस्र इति । आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चैताश्चतस्रस्तु लोकसस्थितिहेतवः इति कामन्दकोक्तेश्चतस्रो विद्या ।

६—तास्चास्य हृदि पुरुषप्रयत्नमन्तरेणैव स्वतो विभासिता स्यु' । भगवतो विभूतित्वात् ।

७—साङ्गरहस्येति-अङ्गानि शिक्षादीनि षट् तद्रहस्यरूपा ।

भवेन्महाज्ञाननिधिर्महात्मा दयार्णवो विश्वविभूतिरेषः[1] ।
तरोरिवास्याथ[2] समाप्रवृत्तिर्मित्रारिवर्गे[3] सृजति स्वकार्यम् ॥४९

अतीन्द्रियार्थप्रतिपादकोऽसौ[4] वेदस्तु धर्मं यमुपादिदेश ।
समाचरेत् तं जगतां शिवाय निष्ठा हि धर्मे महतां निसर्गः ॥५०

लोभानृतक्रोधतमोतिहिंसामयेप्ययं[5] गौतमवद् युगेऽस्मिन् ।
लोकानहिंसाव्रतमेकधर्मं संग्राहयेत् स्वीयतपोमहिम्ना ॥५१

सुरेज्यदैत्येज्यकृतेऽर्थशास्त्रे[6] कामन्दकीयेऽपि च कौटिलीये ।
प्रकाशयन् वर्त्म नयस्य गूढं दृश्येत लोकैस्तैरिवैष[7] धीमान् ॥५२

चराचरं विश्वमसौ विधाता ससर्ज यन्नामबलेन सर्वम् ।
नित्यं हरिः पाति च तन्महेशो ग्रसत्यजस्रञ्च कृतव्यवस्थम् ॥५३

---

१—विश्वेति–विश्वस्य भगवतो विष्णोर्विभूतिः विश्वं विष्णुर्वषट्कारेति विष्णुसहस्रनामोक्तेः। अथ च विश्वस्य संसारस्य विभूतिर्विभूषणम्।

२—तरोरिवास्य शत्रुमित्रयोः तुल्या प्रवृत्तिः ।

३—मित्रत्वारित्वकार्यं विदधत्यपि समा प्रवृत्तिर्नतन्निमित्तकः कश्चिद्विशेषः।

४—यदिन्द्रियाग्राह्यम् तत् अतीन्द्रियम् तत्प्रतिपादको वेद एव नान्यः पुरुषकृततर्कादिः ।

५—इहातिहिंसाया लोभानृतक्रोधतमांसि कारणानि। गौतमवत् बुद्धवत् ।

६—बार्हस्पत्ये, औशनसे, कौटिलीये चार्थशास्त्रे।

७—तत्तदर्थशास्त्रप्रणेतार इव ।

यस्य प्रभावात् धरणिं बिभर्ति ससागरां साद्रिवनामहीन्द्रः ।
सर्वान्ग्रहर्क्षांश्च नभोऽपि यत्र भ्राम्यन्ति सूर्येन्दुसमीरभानि ॥५४

यन्नाममाहात्म्यमसौ पुरारिस्तदात्मभूतो नितरामवैति[१] ।
आत्मामृतानन्दमयानुभूतिमात्मेव नान्यो निखिलं यथावत् ॥५५

यच्चिन्तनानन्दरसाभिमग्ना[२] ब्रह्मर्षिसिद्धार्चितपादपद्माः ।
कौमारभाजः सनकादयस्ते नारायणस्यांशकलामवापुः ॥५६

पुरा शिशुर्हीनकुलोद्भवो[३]ऽयज्ञपोपदेशं समवाप्य सद्भिः ।
ब्रह्मात्मजस्तद्गुणगानतो[४]ऽभूद्ब्रह्मर्षिवर्यः किल नारदोऽसौ ॥५७

सुमेरुशैलोपममुन्नतं स्यादगाधमप्यब्धिसमं समन्तात् ।
यत्पापकूटं[५] प्रदहेत् तदाशु स्मृतं सकृत् तूलमिवानलो यत् ॥५८

प्रतीपवर्णस्य[६] च यस्य नाम्नो व्याधोपि वल्मीकभवो जपेन ।
भूत्वा कवीनां[७] प्रथमो महात्मा जग्रन्थ रामायणमादिकाव्यम् ॥५९

---

१—नितरा सम्यक् पुरारिरेव अवैति वेत्ति—इति तात्पर्यम् ।

२—यस्य रामनाम्नः चिन्तनात् स्मरणात् ।

३—शूद्रीगर्भसम्भूत. ।

४—तद्गुणगानमहात्म्यादेव ब्रह्मपुत्रता प्राप्य देवर्षिवर्यो बभूवेति भावः ।

५—एकत्र यच्छदेन पापकूटस्य अपरत्र च नाम्न· परामर्श· ।

६—प्रतीपवर्णस्य राम इत्यत्र मरा इत्यस्य जपात् व्याध वाल्मीकिरिति प्रसिद्ध आद्य. कविर्बभूव । तदुक्त गोस्वामीतुलसीदासेन रामायणे । उलटा नाम जपत जगजाना वाल्मीकि भये ब्रह्म समाना ।

७—सर्वेषा कवीना प्रथम. । कालतो रचनातश्च मर्त्यलोके ।

भग्नो नितान्तं विषयान्धकूपे[1] पत्न्याप्युपालभ्य गृहान्निरस्तः ।
यस्य[2] प्रसादात् तुलसी सुभक्तो रामायणं मानसमाततान[3] ॥६०

तद्रामनामामृतविन्दुवर्षरसामितास्वादपरायणः स्यात् ।
तस्याथ[4] नाम्नो महतीं प्रतिष्ठां निष्ठां च सत्येऽसमतां विदध्यात् ॥६१

रामेति दिव्यास्त्रवलेन सद्यः स्वतन्त्रयेद् भारतवर्षमेतत् ।
चिरं परायत्तमिदं परेभ्यो, विनैव जन्यं निखिलाङ्गपूर्णम् ॥६२

वपुर्यदीयं[6] सुषमानिधानम् पश्यन्वचः प्रेममयोपदेशम् ।
शृण्वंश्च लोकस्सहसा विमुह्येत् तन्मोहनाख्यो भवितेह लोके ॥६३

किं वा बहूक्तेन फलेन विद्वन्नयं विभूतिर्जगदीश्वरस्य ।
एतत्समादर्शितमार्गगामी श्रेयोऽधिगच्छेदखिलं[7] हि लोकः ॥६४

इत्थं जातककोविदेन कथितां वाचं सुधावर्षिणी—
मानन्दाम्बुधिमग्नया दयितया प्रेमाश्रुपूर्णेक्षणः ।

---

(१) विषयएव अन्धकूपः तत्रातिमग्नमिति भावः ।

(२) यस्येति रामनाम्नः ।

(३) भगवतः शम्भोर्मानसे स्थित रामायण विरचयामास ।

(४) रामनाम्नः महती प्रतिष्ठा संस्थापयेदिति भावः ।

(५) नैतदद्यावधि क्वापि दृष्ट यत् सकलसैन्यसाधनादिसमर्थेन राज्ञा केनापि कदाचिदपि राज्यं परित्यक्तम् युद्धं विनैव । इदं सर्वं रामनाम्नो गान्धेश्च महिम्नः फलमिति भावः ।

(६) वपुस्सौन्दर्यमधुरवचनाभ्यां जगन्मोहनात् मोहन इति नाम ।

(७) अखिलमिति श्रेयो विशेषणम् । लोकविशेषणत्वे तस्य सर्वविध-श्रेयःप्राप्त्यर्थ प्रतीतिर्न स्यात् ।

साकं श्रेष्ठिवरो निशम्य विबुधं सम्पूज्य रत्नादिभि-
र्भक्त्या तं विससर्ज सोऽपि परमप्रीतो ययौ स्वालयम् ॥६५

इति श्रीगान्धिचरिते श्रीसाधुशरणमिश्रविरचिते-

प्रथमः सर्गः समाप्तः ।

# गान्धि-चरितम्

## [ द्वितीयः सर्गः ]

अथासौ ववृधे बालश्चन्द्रमा इव प्रत्यहम् ।
प्रचीयमानावयवो लोकचक्षुर्महोत्सवः ॥१

जानुभ्यां[1] रिङ्गमाणोऽसावलकैराकुलः स्वकान् ।
वारयन् वारकांस्तद्वन् मुमुदे मोदयंश्च तान् ॥२

जनोदितं[2] वचोऽस्पष्टं लपन् लीलाधृताङ्गुलिः ।
स्खलन्, रुदन्, हसन्, गच्छन्, रमयामास मातरम् ॥३

विशालनयनः श्रीमान् गम्भीरस्मितशोभनः ।
दिव्येन महसा रेजे द्वितीय इव वामनः[3] ॥४

कृतचौलादिसंस्कारो[4] मुण्डनोद्भासिसुप्रभः ।
शाणोल्लीढमणेः शोभामभिपेदे स मोहनः ॥५

---

(१) विषमादि भूमिं गच्छन्तं तं यथान्ये जना करादिना मा गच्छेति वारयन्ति, तथा तानपि करादिचेष्टादिना ध्वनिना च वारयतीति बालाना नैसर्गिकः स्वभावः ।

(२) जनोदित तथैवोच्चारयतुमिच्छन् अस्पष्टं वदन्निति भावः ।

(३) बालत्वादल्पकायत्वाच्च अलौकिकशरीरप्रभया विशालनयनतया श्यामवर्णतया च वामन इवेति भावः ।

(४) मातृपितृरजोवीर्याश्रितदोषस्य तद्रूपगर्भकेशाना च अपसारणात् मुण्डनाच्च शाणोल्लीढमणिवदवभासनमिति भावः ।

दैवज्ञकथिते लग्ने विद्यारम्भमवाप्नुवन् ।
रामेति जगृहे वर्णौ पूर्वं शिष्टाननन्तरम् ॥६

रमन्ते प्राणिनो यत्र यश्चैतेष्वपि सर्वदा ।
रमणाद्देहिनामात्मा रामो नास्त्यत्र संशयः ॥७

रकारः प्रकृतिः शुद्धा मकारः पुरुषः स्मृतः ।
सर्गस्थितिलयास्ताभ्यां सम्भवन्ति निरन्तरम् ॥८

अतो रामात्मकं विश्वं सत्यमेतन्न संशयः ।
तस्मात् सुबुद्धयो भक्ता रामनामपरायणाः ॥९

प्रेषयिष्यन् गुरोर्दिव्यमाश्रमं तनयं सुधीः ।
शिष्योचितमसौ धर्मं जनकस्तमशिक्षयत् ॥१०

तपसा साध्यते वत्स विद्याध्ययनमुत्तमम् ।
तस्माद् विद्यार्थिभिर्भाव्यं पूर्वं सम्यक् तपस्विभिः ॥११

---

(१) परम्परागता लोकस्य पुरातनीय प्रथा यद्वालाना प्रथमत. क्रियमाणे विद्यारम्भे राम गति देहि सुमतिमिति वाक्यस्य सर्वप्रथममुपदेश.।

(२) रामेत्यनयोर्वर्णयोरेव प्रकृतिपुरुषात्मकत्वमिति भावः ।

(३) सुबुद्धित्वस्य सद्भक्तिमत्त्वस्य च सीतारामपदारविन्दनिष्ठैव लक्षणम् ।

(४) मातृ--पितृ--कृताभ्यास एव बाल सन्मार्गे वासन् मार्गे प्रवर्तत इति भावः ।

(५) विद्या प्राप्तौ तप· कारणम् तच्च गुरुशुश्रूषण-ब्रह्मचर्य-पालन रूप, विषय वासनादिराहित्यञ्चेति भाव. ।

यथाभिन्नघटे तोयं क्षणं नाप्यवतिष्ठते ।
तथा सरन्ध्रे[1] हृदये न विद्या स्थितिमाप्नुते ॥१२

ब्रह्मणो ननु वेदस्य वाऽऽज्ञा तत् परिपालनम् ।
ब्रह्मचर्यमिति प्रोक्तमायुर्मेधाभिवर्द्धनम् ॥१३

कथमब्रह्मचारी सन् विद्यामाप्तुं भवेदलम् ।
व्यङ्घ्रिर्गन्तुमिव[2] द्रष्टुमचक्षुरिव मानवः ॥१४

गुशुश्रूषकः शिष्यो विद्यां सर्वामवाप्नुयात् ।
तस्मात् विद्यार्थिभिर्भाव्यं गुरुसेवापरायणैः[3] ॥१५

श्रद्धयाधिगता विद्या गुरुपादाब्जसेवया ।
येन[4] तस्याक्षयः सा स्याद् वर्द्धिष्णुः शेवधिः परः ॥१६

न तदस्ति जगत्यां यद् विद्यया नाधिगम्यते ।
तत्प्रदातरि कस्य स्यादवज्ञापपशोरिव[5] ॥१७

---

(१) यथा सच्छिद्रे घटे जलं नावतिष्ठते तथा सरन्ध्रे हृदये विद्या न स्थतिं प्राप्नोति । अत्र हृदयस्य सरन्ध्रता विद्या विरोधिविषयसेवनादिति भावः ।

२—विगतो अङ्घ्रिर्यस्य । न विद्येते चक्षुषी यस्य असौ अचक्षुः । यथाङ्घ्रिहीनो गन्तुं दृष्टिरहितो द्रष्टुञ्चनालम्भवतः । तथा चाब्रह्मचारी विद्यामाप्तुं नाऽलमिति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।

३—गुरुशुश्रूषया विद्येति मनूक्तेः ।

४—येन गुरुपादाब्जसेवया श्रद्धया विद्या अधिगता तस्य सा विद्या परः शेवधिरिति भावः ।

५—अपकृष्टः पशुः अपपशुर्हीनपशुरिति भावः ।

प्रेत्य[1] चेह च कल्याणं न भवेत्तस्य मानिनः ।
यः सदाचारमुत्सृज्य गुरोर्विद्वेषमाचरेत् ॥१८
यथा[2] निम्नप्रदेशः स्यात्सलिलाधानमुत्तमम् ।
तथा विनम्रो विद्यानामाधारः परमः स्मृतः ॥१९
लोकपादतलस्थो हि ग्रीष्मे दूर्वागणो यथा ।
वर्द्धते विनतो धीमान्नेतर[3]श्च मदोद्धतः ॥२०
एवं पित्रा स्वकर्तव्यमनुशिष्टः प्रणम्य तम् ।
यास्यन् गुरुकुलं मातुर्ववन्दे चरणाम्बुजम् ॥२१
मूर्ध्न्युपाघ्राय तं स्नेहादङ्कमारोप्य वत्सला ।
सुतस्पर्शसुखानन्दमग्ना किञ्चिन्न वेद सा ॥२२
गुरुसेवाव्रतन्तस्या यद्यप्यासीत्सुसम्मतम् ।
तथाप्यस्य वियोगोष्मा मनः सुमम[4]मर्दयत् ॥२३
तुषारासारसम्पातम्लानपद्ममिवाभवत् ।
तस्या पद्मपलाशाक्ष्या वदनं निष्प्रभं शुचा[5] ॥२४
पादयोः प्रणतं पुत्रं स्नेहादुत्थाय विह्वला ।

---

१—अमुष्मिन् परस्मिश्च लोके ।

२—यथा निम्ने प्रदेशे सलिलं तिष्ठति तथा विनम्रे जने विद्याऽपीति भावः । अत्राधानशब्दस्याधिकरणल्युडन्ततयाधारार्थप्रतीतिः ।

३—तस्मादितरः मदोद्धतः वर्द्धितोऽपि क्षयमेतीति भावः । दूर्वेतर-तृणवत् ।

४—सुममिति—अस्याः मनः सुमम्—हृदय कुसुमम् अमर्दयत् । म्लानिमनैषीदिति भावः । "स्त्रियः सुमनसः पुष्प प्रसून कुसुम सुममि" त्यमर ।

५—शुचा हिमपातक्लान्तकमलमिव तस्या वदनं निष्प्रभमित्युपमा ।

शिक्षां मधुरया वाचा ददौ गुरु[1]कुलोचिताम् ॥२५

मा वत्स जातु कार्षीस्त्वं गुरोराज्ञावहेलनम् ।
या बुद्धिर्मयि वा ताते सा गुरौ[2] समपेक्षिता ॥२६

यस्योपदेशादाप्नोति लोको दुर्लभमात्मनः ।
नरत्वमन्यथा नूनं पशुतां[3] नात्र संशयः ॥२७

महान्धकारमज्ञानं यो व्युदस्यानुकम्पया ।
स्वात्मानं दर्शयत्यद्धा[4] येना[5]मरपदं व्रजेत् ॥२८

स गुरुर्मनसा वाचा वपुषाऽराध्यताम्मुदा ।
तस्य प्रियं[6]हिते नित्यं तत्परेणा[7]थ भूयताम् ॥२९

सद्विद्याधिगमेनैव नरत्वं सफलं मतम् ।
यस्मादुत्तमधर्मस्य प्रादुर्भावो भवेद्ध्रुवम् ॥३०

---

१—शुश्रूषुरेव गुरुगतविद्याधिकारीतिरूपामिति भावः।

२—अत्र विभिन्नविभक्तितया न पुनरुक्तिः। समानविभक्तिकस्य पुनरुपादाने पुनरुक्तदोषापत्तेः। वस्तुतस्तु सा तत्र समपेक्षितेति पाठः समुचितः।

३—अन्यथा धर्मविवेकाभावात् पशुत्वमेव पुंसां भवतीति भावः।

४—अद्धा—साक्षात्।

५—येनात्मज्ञानेन अमरपदं देवत्वं मोक्षपदं वा।

६—तस्य गुरोः यत्प्रियं हितं च तत्सम्पादने तत्परेण भवितव्यमिति भावः।

७—अथवा स गुरुः परः प्रधानं यस्य स तत्परः तेनेति च।

८—नरत्वमेव सद्विद्याप्रादुर्भावस्थानमिति भावः।

धर्म[1] एव[1] नरत्वस्य फलं वास्तविकं स्मृतम् ।
श्रेयस्स्यात् प्राणिनां येन तस्मात् तं पालयेत् सुधीः ॥२१

स्वधर्मपालनं[2] कार्यं[2] प्राणैः कण्ठगतैरपि ।
कल्याणं जगताञ्चेति विद्धि मानवताफलम् ॥२२

इत्थं मातृकृतादेशो गुरोराश्रममभ्यगात् ।
सेव्य[3]मानं मुदा शिष्यैः कमलं भ्रमरैरिव ॥२३

पुष्पितैः शाखिभिः प्रान्त-स्थितैव्र्रतति भूपितैः ।
पिकालिगीतिललितैर्ययौ वर्त्म मनोहरम् ॥२४

गच्छन् गुरुकुलं मार्गमभितो नन्दनोपमम् ।
मनःप्रीतिकरं रम्यमुद्यानं समलोकयत् ॥२५

( विशेषकम् )

अतसीकुसुमश्याममलकाञ्चितसुन्दरम् ।
पीताम्बर महोरस्कं नवकञ्जारुणेक्षणम् ॥२६

आजानुबाहुं सुनसं मन्दस्मितमनोहरम् ।
तत्रायान्तममुं दृष्ट्वा वीरुधो मेनिरे स्मरं[4]म् ॥२७

---

१—धर्म एव नरत्वस्य फल तदभावे पशुत्वमेव भवतीति भावः ।

२—येनात्मन लोकाना च श्रेयस्स्यात् स सतत रक्षणीयः ।

३—वक्ष्यमाण शिष्यैः सेव्यत्वमादाय कवेरुक्तिः ।

४—अमुमायान्तं विलोक्य लताः स्मरम्मेनिरे । काम एवाय भ्रमतीति भाव । अत्रः भ्रान्तिमदलङ्कारः ।

बालमप्यद्भुतं धीरं मूर्तिमन्तं शुचिस्मितम् ।
रसं[1] शान्तमिवैकान्ते भ्रमन्तं ददृशुर्लताः ॥३८

तद्दर्शनमहानन्दोल्लासा व्रततिराजयः ।
पुष्पाणि ववृषुर्मन्दहासानिव[2] शुचिव्रता ॥३९

नगाः[3] कुसुमिताः पाणिपल्लवेषूपकल्प्यते ।
तस्मै फलान्युपाजह्रुः पुष्पाणि च मुनिव्रताः ॥४०

श्यामं[4] पीताम्बरं तत्र भ्रमन्तं नलिनेक्षणम् ।
समूर्तिं तं तडित्वन्तं मत्वानर्तीत् शिखावलः ॥४१

सुहृ[5]देषो हि भूतानामिति ते तरवो मुदा ।
स्वागतं जगदुस्तस्मै वयसान्निनदैः कलैः ॥४२

---

१—एकाकिनमायान्तममु विलोक्य मूर्तिमन्तमिव शान्तं रसं व्यलोकयन् लता इति भावः ।

२—पुष्पाणि मन्दहासानिव ववृषुरित्युपमा ।

३—मुनि सहवासात् तद्व्रतधारिणो नगाः पल्लवा एव पाणयः तेषु फलानि पुष्पाणि चादाय तस्मै उपाजह्रुरिति योजना । अत्र परिणामः प्रकृतोपयोगात् ।

४—तत्र वनमार्गे मोहन पीतवाससं पद्मलोचन श्याम भ्रमन्त विलोक्य शिखावलः समूर्तिं तडित्वन्त घनमेव मत्वानर्तीत् । अत्रापि परिणाम एव । भ्रान्तिमाश्च विद्यते ।

५—वयसा कलैर्निनदैः तस्मै तरव. स्वागत जगदु यतः सर्वभूताना एष सुहृत् ।

साक्षात् मधुसखः श्रीमान् मन्मथो नलिनेक्षणः ।
मित्रान्वेषीति तदभूत् वनं कुसुमितं क्षणात् ॥४३

वनप्रियाऽणाम्मधुरां काकलीमलिहुङ्कृतैः ।
कीचकैर्वनदेवीनां गानञ्चाकर्णयन् ययौ ॥४४

व्रजन् क्वचिद् ददर्शासौ सरो विकसितोत्पलम् ।
भ्रमद्भ्रमरनिस्वानैर्मधुरैरुपशोभितम् ॥४५

ततः प्रचण्डनिर्घोषं पर्वतोद्भेदनक्षमम् ।
शुश्राव गर्जितं सिन्धोर्वीचिसंघर्षजं महत् ॥४६

अथैक्षत महाम्भोधिं तरङ्गशतसङ्कुलम् ।
समुच्छलच्छंङ्खकुलैः फेनैरिव विराजितम् ॥४७

उपकूलममुं प्राप्तमुदधिः समवीजयत् ।
मन्दैर्वीचिधूतासारशीतलैर्मलयानिलैः ॥४८

---

१—अय हि वसन्तसखः काम एव मित्रान्वेषीति कृत्वा क्षणात् सर्वं वनं कुसुमितमिति सम्बन्धः। स्वामिनो मित्रस्य बहुमानप्रदर्शनार्थमिति भावः।

२—वनप्रियाणा मधुरा काकलीमलिहुङ्कृते कीचकैः करणैः वनदेवीना गानञ्चाकर्णयन्निति सम्बन्ध.। वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इत्यमरः।

३—प्रचण्डः निर्घोष. निस्वानो यस्मिस्तद्गर्जित शुश्राव। वीचीना ससर्गैर्महत् गुर्विति भावः। अत्र निर्घोषगर्जितयोरर्थपार्थक्यम्। यद्यपि स्तनित गर्जित मेघनिर्घोष इत्यमरस्तथापि समुद्रेऽपि गर्जित शब्द प्रयोगः चिरन्तनैः कृत इति तदर्थे प्रयुक्तः। तथा च स्पष्टमुपलक्ष्यमाणः निर्घोष. अस्पष्टश्च गर्जितमिति। अत्र अग्रेऽपि पूर्वश्लोकस्थस्यासावित्यस्य अनुकर्ष.।

बालोऽप्येषोऽचिराद् राष्ट्रपिता स्यादिति गौरवत् ।
रत्नै रत्नाकरः प्रीत्याऽपूजयत् पुलिनार्पितैः ॥४९

अहीशभोगपर्य्यङ्कमधिशेते हरिः क्वचित् ।
क्वापि दैत्यकुलं लक्ष्मीरलक्ष्मीश्चापि सागरे ॥५०

क्वापि काकोलम्[1] त्युग्रममृतश्चामरत्वदम् ।
क्वचित् सलिलद[2]श्चन्द्रो वाडवो महसोज्वलः ॥५१

अप्सरोभिश्च रक्षोभिर्यादोभिश्च सुरोत्तमैः ।
नदीनाञ्च पयःपूरैर्वाडवेन जलाशिना ॥५२

सैकतैश्चापि रत्नैश्च परीतस्योदधेरभूत् ।
न क्वापि विकृतिस्सन्तो निःक्षोभाः सन्ति सर्वदा ॥५३

इत्थं विरुद्धधर्माणां स्थितावपि निराकुलः ।
पयोनिधिः प्रशान्तात्मा सर्वं हि महताम्महत् ॥५४

पेयापगानां सम्बन्धे परीवाहेऽमृत[3]स्य च ।
सत्यप्यपेयता सिन्धोर्भाव्यङ्को नाम वारयेत् ॥५५

---

१—काकोलं विषम्—पुंसि क्लीबे च काकोलकालकूटहलाहला इत्यमरः ।

२—सलिलद इति—सलिल ददाति द्यति च ससिलदश्चन्द्रो वाडवानलश्च । चन्द्रोदये समुद्रवर्द्धनात् ।

३—अमृतस्य जलस्य मेघ द्वारा परीवाहेऽपि अपेयतेति सिन्धोरिति सम्बन्धः । भाव्यं भावीति भावः । अत्र विशेषेण सामान्यार्थ सामर्थनरूपोऽर्थान्तरन्यासः ।

अन्तरीक्षवदायाममगाधत्वञ्च वारिधेः ।
प्रेक्ष्यागस्त्याञ्जलेर्मेने महात्म्यमधिकं शिशौ ॥५६

ततोऽसौ छात्रसङ्घानां शुश्रावाध्ययनध्वनिम् ।
वर्षासूद्गारिशालूरवृन्दानामिव शोभनम् ॥५७

ततो जलनिधेर्लोलतरङ्गकणवाहिनाम् ।
मारुतां मन्दसञ्चारैरभिपूतं सुशीतलम् ॥५८

विद्यामन्दिरमद्राक्षीदम्भोजं मधुपैरिव ।
सेव्यमानं मुदा शिष्यैः सद्विद्याधिगमोत्सुकैः ॥५९

तत्राध्यापयतः शिष्यान् कुलीनानर्थदर्शिनः ।
स ददर्श गुरून् सत्यव्रतान् सद्वृत्तशालिनः ॥६०

तत्रोपगम्य विधिवदुपाध्यायान् ननाम सः ।
नामगोत्रे समुच्चार्य विनम्रः प्राञ्जलिः शुचिः ॥६१

इन्दनीलमणिश्यामं राजीवारुणलोचनम् ।
व्यूढोरस्कं महावाहुं पीतवासो विभूषितम् ॥६२

शरच्चन्द्राननं राजन् मन्दस्मितसुशोभनम् ।
सहसोपनतं वालं तेजसाक्षिप्तदर्शनाः ॥६३

---

१—पाठालयभवनम् ।

२—कुलीनान्-आर्यान् । महाकुलकुलीनार्यसभ्यसज्जनसाधव इत्यमरः ।

३—कुलीनानर्थदर्शिन इति विशेषणद्वयम् गुरुशिष्ययोरुभयत्रापि सम्वध्यते ।

दद्दशुस्तत्र तं सर्वे विस्मयोत्फुल्लमानसाः ।
विभासयन्तं महसा भारतीमन्दिरं शुभम् ।।६४

शेषशय्यां[1] विहायाब्धौ दयितं भक्तवत्सलः ।
नारायणः सुदामानम् द्रष्टुं किमयमागतः ।।६५

सुदाम्नो[2] भक्तवर्यस्य पुरीं स्नेहाद्विलोकितुम् ।
भोगिभोगं विहायाब्धेः कृष्णः किमयमागतः ।।६६

अथवा मदनः साक्षादृतुर्वा कुसुमाकरः ।
पुण्यक्षेत्रमिदं द्रष्टुं स्वयमागतवान् किमु ।।६७

लक्षणैर्ज्ञायते सम्यक् शरीरस्थैरलौकिकैः[3] ।
विभूतिर्विश्वरूपस्य लोककल्याणकारिणी ।।६८

इत्थं वितर्कयामासुस्तदा प्राथमकल्पिकाः[4] ।
सोपाध्याया विलोक्यामुं तेजसा ज्वलनोपमम् ।।६९

ततः सभाजयामासुरुत्थितास्ते[5] निजासनात् ।
तद्दर्शनमहानन्दजातसौहार्दभावनाः ।।७०

---

१—सहसा नीलमणिकान्तेः पीताम्बरस्य लोकोत्तरलावण्यशोभिसकलशरीरावयवस्य तस्य दर्शनात् नारायणभ्रान्त्या शेषशय्या विहायेत्याह ।

२—प्रायः कवयः एकमप्यर्थं प्रकारान्तरेण वर्णयन्तीत्याशयेनाह सुदाम्न इति । अलौकिकतेजोराशिपीताम्बरपरिधानघनाभवर्णस्पृहणीयलावण्यनिधानादिना कृष्णभ्रान्तिस्तस्मिन्निति भावः ।

३—तदीयशरीरस्थितैर्दिव्यैर्लक्षणैः परमात्मविभूतित्वं तस्य ज्ञातमित्यर्थः ।

४—शैक्षाः प्राथमकल्पिका इत्यमरः ।

५—तदीयालौकिकतेजसा समाक्रान्ता निजासनादुत्थाय सभाजयामासुरित्यर्थः ।

शीलसद्वृत्तपाथोधेर्जातो[1] मोहन-चन्द्रमाः ।
स्वदेहप्रभया सर्वान् सुधयेवावभासयत् ॥७१

ततोऽल्पेनैव कालेन तत्रत्यं साधुकल्पितम् ।
पाठ्यं[2] समापयामास पूर्वाभ्यस्तमिवादरात् ॥७२

इत्थमाम्नायमभ्यस्य[3] धर्मशास्त्राणि सुव्रतः ।
संहिताश्च पुराणानि तर्कशास्त्राणि यत्नतः ॥७३

पितॄनिव गुरून्[4] सार्वान् मानयन् प्रियसत्यवाक् ।
तथा वयस्यान् सुहृदः सोदरानिव[5] सोऽन्वगात्[6] ॥७४

न सत्यमप्रियं[7] जातु प्रियं नानृतमेव सः ।
सुहृदां परिहासेऽपि जगाद स्थिरनिश्चयः ॥७५

---

१—तत्र लोकोत्तर-शीलसदाचारदर्शनात् तत्प्रभवत्व रूपितम् ।

२—तस्य दिव्यसंस्कारतया जन्मान्तरकृताभ्यासमिव पाठ्यं परिसमाप्तिमगात् ।

३—आम्नाय वेदम् शेष स्पष्टम् ।

४—गुरून् उपाध्यायान् ।

५—सोदरान् सगर्भ्यान्

६—विनयावनम्रतया अस्य तदनुगामित्वमिति भावः ।

७—सत्य ब्रूयात् प्रिय ब्रूयात् न ब्रूयात्सत्यमप्रियम् । प्रियञ्च नानृत ब्रूयादेष धर्मः सनातनः इति स्मरन्निति भाव. ।

न तद्[1]जिह्वाऽस्पृशन् मिथ्या शब्दात् तद्वाचकादृते ।
न चापि तन्मुखाम्भोजं क्रोधेन्दुर्[2]व्यलोकयत् ॥७६

धर्मात्मकस्य वृक्षस्य मूलं सत्यं व्यवस्थितम् ।
परोपकारास्तत्स्कन्धा अहिंसा फलमुत्तमम् ॥७७

स[3] तरुस्सर्वथा सेव्यः सर्वैः श्रेयोऽर्थिभिर्जनैः ।
येनात्मनश्च लोकस्य कल्याणमभिवर्धताम् ॥७८

गुरुणानुमतश्चेत्थमुपदिश्य शुचिव्रतः ।
तदुच्चै[4]र्विद्यासदनमभिगन्तुं मनो दधे ॥७९

राजकोटं ययौ पित्रा सार्द्धमध्येतुमानसः ।
भ्रातृभ्यां सहितो वाललीला[5]मधुरदर्शनः ॥८०

सहाग्रजाभ्यां तत्रासावाङ्ग्लीये[6] मनोहरे ।
विद्यालये समध्येतुं प्रविष्टः स्मरसुन्दरः[7] ॥८१

---

१—मिथ्यावाचकमिथ्या शब्दं विना तद्जिह्वानान्यत् किमप्यसत्यमस्पृशदिति भावः ।

२—क्रोध एव इन्दुः क्रोधेन्दुः । तन्मुखकमल क्रोधेन्दुर्नकदाप्यालोकितवान् तदयोग्यत्वात् ।

३—धर्मवृक्षः ।

४—तदुत्कृष्ट विद्यापीठान्तरम् ।

५—वालाना या लीलास्ताभिर्मधुरं दर्शनं यस्य ।

६—लोकानुरोधादेव आङ्ग्लीये विद्यालये अध्येतुं प्रविष्टः, नतु आङ्ग्लयीत्वेन तस्योच्चतया ।

७—लावण्यातिशयमहिम्ना कामादप्यधिकसुन्दरः । दिव्यविभूतित्वात् ।

चलितं लपितं तस्य पठितं प्रेक्षितं स्मितम् ।
हसितं कुपितं चासन् मधुराणि शरीरिणाम् ॥८२

अथात्मानम् विलोक्यासौ पश्चिमे वयसि स्थितम् ।
कर्मचन्द्रोऽस्य पुत्रस्य मङ्गलं कर्तुमैहत ॥८३

वृद्धत्वादात्मनः सूनोरन्तिमत्वाच्च सोत्सवम् ।
त्र[1]योदशेऽपि वर्षेऽसौ तदुद्वाहमकल्पयत् ॥८४

वेदोदितेन विधिना वेदविद्भिरनुष्ठितः ।
ब्राह्मोद्वाहोऽस्य[2] सम्पन्नो वेदघोषपुरस्सरः ॥८५

चन्द्रश्चन्द्रिकयेवाथो तडितेव वलाहकः ।
कस्तूर[3]वेति वध्वासौ शुशुभे मोहनो वरः ॥८६

वाल[4]भावौ च तौ प्रेमा परस्परसमाश्रयः ।
व्रीडावरणसंरुद्धः शनैर्भीत इवास्पृशत् ॥८७

तप्तकाञ्चनवर्णा सा वधूर्नीलमणिद्युतिः ।
वरश्च रेजतुस्तत्र विद्युद्वारिदसन्निभौ ॥८८

---

१—त्रयोदशेति–त्रयोदशे वर्षे विवाहविधौ स्वस्य वार्द्धक्य हेतुः । सोत्सवत्वे सूनोरन्तिमत्वञ्चेति भावः ।

२—ब्राह्मसञ्ज्ञको विवाह इति ।

३—कस्तूरवेति वध्वानाम । शेष स्पष्टम् ।

४—वालभावौ तौ वधूवरौ वधू-वराश्रयः प्रेमा व्रीडा रूपावरणसंरुद्धः शनैर्भीत इव अस्पृशत् इति योजना ।

५—विद्युद्वारिदसन्निभौ वधूवरौ रेजतुः । तत्र वधूः काञ्चनवर्णा वरश्च नीलमणिद्युतिरिति भाव ।

2189

अग्नेः प्रदक्षिणं कुर्वदिदं द्वन्द्वम[1]शोभत ।
रतिस्मरनिभं प्रेमश्रद्धामयमनोहरम् ॥८९

यथा पत्नीव्रत[2]: श्रीमान् नररत्नं स मोहनः ।
तथा पतिव्रता सासीत् रमणीकुलभूषणम् ॥९०

रज[3]न्या स तया वध्वा कलानिधिरिवाबभौ ।
वरेण तेन सा रेजे शशिनेव विभावरी ॥९१

तुल्य[4]कान्ती सवयसौ गौरश्यामौ वधूवरौ ।
विलोक्य मातरः स्नेहान्ननन्दुश्च पुरौकसः ॥९२

स्वाध्यायाभिरुचिर्भूयो विज्ञाप्य पितरावसौ ।
जगाम विद्या-सदनं मोहनो बुद्धिसागरः ॥९३

पितरौ[5] सेवया विद्याऽभ्यासेन च गुरूनयम् ।
सदाचारेण पत्नीं ताम् वाचा मधुरयेतरान् ॥९४

सन्मार्गस्योपदेशेन सतीर्थ्यांश्च सुहृज्जनान् ।
प्रेमसद्भावनावृत्या भ्रातॄंश्च समतूतुषत् ॥९५

---

१—वधूवरात्मकमिति भावः ।

२—पत्नीव्रतः एक पत्नीव्रत इति भावः ।

३—यथा रजन्या कलानिधिः विद्योतते शशिना च विभावरी तथा वरेण वधू रेजे वध्वा च वरः ।

४—समानशोभौ तुल्यावस्थौ गौरश्यामौ विलोक्य मातरः पुरौकसश्च स्नेहान्ननन्दुरिति भावः । मातर इति बहुत्वं श्रेष्ठाना पितृव्यभ्रातृपत्न्यादीनामपि मातृत्वं पूज्यत्व च दर्शयितु कृतमित्यभिप्रायः ।

५—पितरौ सेवया विद्याभ्यासेन गुरून् सदाचारेण पत्नीम् मधुरया वाचा लोकान् समसेवत अतूतुषदिति भावः ।

पितुराज्ञास्थितं रामं प्रशशंस मुहुर्मुहुः ।
तन्निदर्शनमासाद्य तथा कर्तुमियेष सः ॥९६

पित्रोर्भक्तिपरं नित्यं स्कन्धवाहिशुचिव्रतम् ।
कुमारं श्रवणं शुद्धं शृण्वन् साश्रु ननाम सः ॥९७

रोगाभिभूतं पितरमाकर्ण्य विमनाभवन् ।
आचार्यमुपगम्यासौ स्वावकाशमयाचत ॥९८

गुरुणानुमतो गन्तुं पितृसेवा समुत्सुकः ।
सम्प्राप्य सदनं तातपादमूलमुपाविशत् ॥९९

योग्यौषधप्रदानैश्च पादसंवाहनादिभिः ।
पुराणामृतकथाश्रावैः पितरं समसेवत ॥१००

पुन्नाम्नो नरकाद् भक्त्या पितरं त्रायते ततः ।
स एव पुत्रो वेदेषु प्रोक्तोऽन्यः शब्दमात्रभाक् ॥१०१

तस्मात् सर्वात्मना पुत्रो भक्तिमान् श्रद्धयार्चयेत् ।
पितरं सर्वदा साक्षादेष वै दैवतम्महत् ॥१०२

सूपचारे कृतेऽप्यस्य व्याधिस्तु ववृधेऽनिशम् ।
भेषजं शमयेद् रोगं न च मृत्युमुपस्थितम् ॥१०३

---

१—पिताहि दैवतं परम् इति शास्त्रादेशादिति भाव.।

२—पित्रोर्भक्तिपरमिति श्रवणकुमार शृण्वन् साश्रु त प्रणनामेति भावः।

३—भक्त्येति पदोपादानात् आनुसङ्गिकलोकलज्जादिनिमित्तक-कृतसेवाव्युदास.। भक्तिपूर्वकशुश्रूषा विधानस्यैव वेदसम्मतत्वात्। अत एवोत्तरश्लोके भक्तिमान् श्रद्धया चरेदिति वक्ष्यमाणस्य सगतिः।

अथ[1]ान्तकालमालक्ष्य स्वकीयं समुपस्थितम् ।
न विव्यथे स आत्मानं जानन्नजमनश्वरम् ॥१०४

पितृधर्म[2]मनुस्मृत्य सुधीर्धर्मविदाम्बरः ।
पुत्रानाहूय तान् सर्वानुचितं समशिक्षयत् ॥१०५

पुंसां स्याद्[3] जन्मसाफल्यं धर्ममार्गानुसारिणाम् ।
धर्म्मादुत्पद्यते विश्वं तस्मिन्नेव च तिष्ठति ॥१०६

स चानेकविधो वेदे धर्म्मः प्रोक्तः सनातनः ।
इमं संक्षिप्य तत् सारं प्रोच्यमानं निबोधत ॥१०७

अहिंसा[4] सर्वभूतेषु सिक्ता सत्यामृतेन या ।
सैव स्यात् परमो धर्म इति वेदेषु निश्चयः ॥१०८

सैव[5] शब्दान्तरे लोकसेवेति समुदीरिता ।
यतोऽहिंसेति सेवेति द्वयमेकमुदाहृतम् ॥१०९

उपदिश्येति रामेति वदन् शृण्वंश्च संस्मरन् ।
पञ्चभूतात्मकं पिण्डं हित्वा स्वर्लोकमभ्यगात् ॥११०

---

१—अथात्मानमजन्मानमनश्वरमव्ययं च जानन् स न विव्यथे। आत्मनो जन्ममरणादिरहितत्वात् । जन्मनाशौ तु देहस्येति भावः ।

२—पितृधर्ममनुस्मृत्येति—पुत्रैः पित्रानुशिष्टैः भाव्यमिति पुत्रानुशासनस्य पितृकर्तव्यत्वात् ।

३—धर्मेणैव सकललोकरक्षा भवतीति धर्मस्वरूपम् दर्शयति पञ्चभिः ।

४—अहिंसारूपधर्मस्य सर्वाधिकारियोग्यत्वम् सर्वधर्मेभ्यश्च श्रेष्ठत्वम् दर्शयति अहिंसेत्यादिना ।

५—परमार्थेऽहिंसेति सेवेति च द्वयम् एकरूपमिति भावः ।

तातं ह्युपरतं ज्ञात्वा वज्राहतनगा इव ।
व्यपतन्नश्रुभिः सार्द्धं सर्वे ते शोकमूर्च्छिताः ॥१११

अथ शोकाकुलानेतान् बन्धून् संप्रेक्ष्य मोहनः ।
कथञ्चिन्मनसो मोहं सन्निरुद्धयेदमब्रवीत् ॥११२

अम्ब हे भ्रातरो वाचं शृणुतेमां मयोदिताम् ।
कं शोचथ ? किमात्मानं ? शरीरं वा पुरःस्थितम् ?११३

जननं मरणं चेति शरीरस्य न चात्मनः ।
स च सर्वत्रगो नित्यो नाभावस्तस्य कुत्रचित् ॥११४

यथा जीर्णं गृहं लोकस्त्यक्त्वा नूतनमाप्नुते ।
तथा देहमधिष्ठानं विहायान्यच्छ्रयत्ययम् ॥११५

मृतंश्चानुमृतः कोऽपि न च तं लभते क्वचित् ।
स्वकर्मभिस्तयोर्भिन्नलोकवासो व्यवस्थितः ॥११६

---

१—व्यपतन्नश्रुभिः सार्द्धमित्यत्र सहोक्तिरलङ्कारः ।

२—लीलार्थं गृहीतविग्रहत्वेन सर्वेभ्यः स्वां भागवतीं विभूतिं गोपयन् तत्कालोत्पन्नवियोगोद्भूतमोहनिराकरणार्थं शुद्धं ज्ञानस्वरूपमाह अम्बेत्यादिना ।

३—जन्ममरणादिभावः शरीरस्य नात्मनः । नित्यत्वात् सर्वगत्वाच्चेति भावः ।

४—अधिष्ठानमत्राश्रयः ।

५—तद्वियोगजशोकासहिष्णुतया स्वां प्राणान् परित्यज्यापि नाऽसौ पुनः प्राप्यः । प्रतिलोक स्वाचरितकर्मद्वारा विभिन्नलोकान्तरवासव्यवस्थितेः ।

सर्वस्यापि भवेदेषा गतिः काले समागते ।
तस्मान्मृत्योर्न[1] भेतव्यं हर्षितव्यं मनीषिभिः ॥११७

प्राणिनां जन्म मृत्यूच निसर्गाद् भवतो ध्रुवौ ।
मृतश्च जायते यस्माज्जातो वै म्रियते पुनः ॥११८

एवं सर्वान् समाश्वास्य तदन्त्येष्टिक्रियामसौ ।
वैदिकेन विधानेन श्रद्धया समपादयत् ॥११९

पिशाचीमिव[2] पाश्चात्यशिक्षां विप्लवकारिणीम् ।
उत्सार्य पुनरार्यीयां संस्थापयितुमैहत ॥१२०

विधाय गोष्ठीं छात्राणां कदाचिच्छान्तधीरसौ ।
इत्युपस्थापयत्तत्र विषयं दूनमानसः ॥१२१

महाव्यालीव शिक्षेयं यावन्नास्तमिताभवेत् ।
न तावदनयास्माकं दष्टानां कुशलं क्वचित् ॥१२२

पारतन्त्र्यान्दुकेनायं वद्धोदेशोऽनयापि नः ।
ततो मोक्षार्थमस्माभिः प्रयत्नः परिचिन्त्यताम् ॥१२३

कण्टकं कण्टकेनैव जनैरुद्ध्रियते सुखम् ।
विषश्चापि विषेणाशु शाम्यतीति विभाव्यताम् ॥१२४

---

१—मृत्योः शिरसि पद धृत्वा हर्षितव्यमिति भावः ।

२—यदर्थं तनुमग्रहीत् तदुपक्रम दर्शयति पिशाचीमित्यादिना । ता वृटिशसर्वकारप्रवर्तितामिति भावः ।

शिक्षा संस्कृतिमातनोति सुतरा- मात्मानुरूपां भृशं,
साहित्यं परिवर्द्धयेदतितरां-तामेव सद्यो दृढम् ।
तत् स्वायत्तमदोद्वयं यदि भवेद् देशस्य तस्यास्त्यसौ;
स्वाधीनश्च विवर्धते च लभते ख्यातिञ्च भूमण्डले ॥१२५

[२]यावद्गुरुण्डनयवर्त्मनिगूढभावः
सम्यग् भवेन्न विदितो नहि तावदस्य ।
स्वातन्त्र्यमुज्वलमहो ननु भारतस्य
स्याद्भारतस्य च यतः सुखिता जनानाम् ॥१२६

इति सह सवयस्यैर्मन्त्रयित्वार्थमेवं-
निजमतमनुयद्भिश्चारु पाश्चात्यदेशम् ।
जिगमिषुरथ मातुः सम्मतिञ्चाग्रजीया-
मगमदनुनिकेतं प्राप्तुमिच्छुः कुमारः ॥१२७

मातुर्वासगृहं व्रजन् विनयिनामग्रेसरो मोहनः ।
कारुण्यामृतवारिधेः सुतजनाभीष्टार्थसिद्धेरसौ ॥

---

१—यथा भवति शिक्षा सा तदनुरूपामेव संस्कृतिं जनयति । साहित्यमपि तामेव संस्कृतिं दृढीकरोति । द्वयोरप्येतयोः स्वाधीनत्वे स्वदेशानुकूला संस्कृति-रुत्पद्यत इति भावः ।

२—स्वमानसविचारमाह यावदित्यादिना यावद्वृटिशाधिपतिनीति-मार्गरहस्य नोद्घाटितं भवेत् तावदस्य भारतस्य स्वातन्त्र्य न स्यात् इति भावः । भारतस्य-भारतस्येत्यनयोरेकं प्रभया प्रभाया वा रतस्य इत्यर्थ-बोधक, द्वितीय भारतदेशस्य बोधकम् ।

किम्वाम्बेह वदिष्यतीति मनसा शङ्कां दधानः शनै-
राप्नोत् तत् सहसाग्रजः समुदितैर्मित्रैः प्रियैर्भक्तिमान् ॥१२८

इति श्री गान्धिचरिते श्री साधुशरणमिश्र विरचिते
द्वितीयः सर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## [ तृतीयः सर्गः ]

ततो जगाम त्वरितं स मोहनः सहाग्रजाभ्यां जननीनिकेतनम् ।
ददर्श तां तत्र सुताननेक्षणात् सुवत्सलां स्नेहसुधाभिवर्षिणीम् ॥१

सहाग्रजस्तां प्रणनाम पादयोः शिरस्युपाघ्राय तयाभिनन्दितः ।
जगाद पृष्टश्च निजेप्सितन्तदा भवन्कृतार्थो जननीं स मोहनः ॥२

मयाम्ब पाठ्यं यदिहावकल्पितं समापितं तन्निखिलं मनोहरम् ।
परं ममेयं हृदयेऽस्ति कामना प्रतीच्यदेशाभ्यगमाय साम्प्रतम् ॥३

गतेन तत्राशु मया नु तत्पदं सुखेन मातः सुलभं न संशयः ।
वदन्ति लोका यदिहाक्षदर्शिकम् यतो भवेद्भारतवाञ्छितं ध्रुवम् ॥४

अनेकविद्याकुशलाः सुधीगणाः विभिन्नविज्ञानकलाविचक्षणाः ।
त्रिवर्गराज्याङ्गरहस्यवेदिनो महोद्यमास्तत्र वसन्ति विश्रुताः ॥५

---

१—पितुरिव मातुरपि भक्तत्वात्तस्य । मातु. सम्मतिग्रहणात् पूर्वमेव गृहीताग्रजानुमतिरतस्ताभ्या सहैव मातुर्निकेतनमगमत् इति भाव. । तत्र भवने, पुत्रवत्सला पुत्राननदर्शनात् स्नेहसुधाभिवर्षिणीम् मातरं ददर्शेति भावः ।

२—प्रतीच्या भवः प्रतीच्य । तत्राभ्यगमाय अभ्युपगमाय हृदये कामना अस्तीति योजना ।

३—द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकावित्यमरः । अक्षदर्शकस्येद पदमाक्षदर्शिकमिति व्युत्पत्तिः ।

४—तत्र गमने स्वीयमावश्यकत्वं समर्थयते अनेकविद्येत्यादिना ।

चिरादिदं भारतवर्षमीदृशं नितान्तदुःखं परदासतां गतम् ।
अथास्य मुक्तिं यदि कोऽपि साधयेत् ततोऽस्य तेषां सहयोग ईप्सितः ॥६

समुद्रयात्रा[२] प्रतिषेधितागमे महर्षिभिर्धर्म्मरहस्यवेदिभिः ।
परन्तु विद्यामधिगन्तुमिच्छया न सा निषिद्धेति कृता व्यवस्थितिः ॥७

समुद्रयात्रापरिवर्जनात्मकं[३] श्रुतेर्वचो यत् कृतिभिः प्रदर्शितम् ।
तदस्य तत्त्वं जगदुः सुधीश्वराः यथा सुरक्षा निजसंस्कृतेर्भवेत् ॥८

प्रतीपधर्माचरणस्य सम्भवाद् विरुद्धभक्ष्यादिसमाश्रयादपि ।
विगर्हिताचारसमावलम्बनात् महाब्धियात्रा विहिता न चागमे ॥९

ततो[४] नु कश्चिद् यदि धर्ममात्मनः सुचारुरूपेण च पालयन् भवेत् ।
विशिष्टविद्याधिगमार्थमम्ब सा परं प्रशस्तेति मतं मनीषिणाम् ॥१०

न[५] यस्य कश्चित् परिहारसम्भवो, विभाति तस्मिन्नृषिभिर्महात्मभिः ।
कृतस्तु संकोचविधिर्व्यवस्थया, तदर्थतात्पर्यसमन्वयादिभिः ॥११

---

१—देशोद्धारक्रियायामपि तत्सहयोगस्य ईप्सितत्वेन तत्र गमनं नितरामावश्यकम् ।

२—यद्यपि महर्षिभिर्धर्मतत्त्ववेदिभि. समुद्रयात्रा धर्मशास्त्रेषु प्रतिषेधिता तथापि कामपि विद्यामधिजिगाषूना कृते नेति भावः ।

३—समुद्रयात्राप्रतिषेधे वेदतात्पर्यमाह-समुद्रयात्रेत्यादिना-निज सस्कृति रक्षार्थमेव समुद्रयात्राप्रतिषेध इति भावः ।

४—स्वसस्कृति प्रति सावधानस्य समुद्रयात्रा न दोपावहेति दर्शयति ततो नु कश्चिदित्यादिना ।

५—यत्र सर्वथा परिहारासम्भवस्तत्र वेदज्ञैस्तद्वचनतात्पर्यप्रकरणसमन्वयादिभिः व्यवस्थितमिति भावः ।

ततोऽभ्यनुज्ञामधुना प्रदेहि मे, नतोऽस्मि मातस्तव पादपङ्कजम् ।
समीहितं यज्जननी न पूरयेत्, सुतस्य तत् पूरयिता न चापरः ॥१२

इतीदृशैः प्रेममयैर्मनोहरैर्मुदाथ सा तद्वचनैरधीश्वरी[1] ।
सुतं समादाय जगाद वत्सला, तवेप्सिते पुत्र ममास्ति सम्मतिः ॥१३

परन्त्वयम्मे हृदये नु संशयः समुत्थितो वत्स विवर्द्धतेऽनिशम् ।
यदि त्वमेन परिहर्तुमीश्वरस्तदा महान्तं परितापमाप्नुयाम् ॥१४

कथन्नु बालस्त्वममुं महार्णवं विशालमेकः प्रतरीतुमीहसे ।
भवन्ति तत्र व्रजतां विपत्तयः ततोऽधुना मे हृदयं विकम्पते ॥१५

न यत्र मित्राणि न सन्ति बान्धवाः न चापि तेऽभीष्टसुचिन्तका जनाः ।
कथं त्वमेकः परिसर्पणोचितो[2] विभावयेस्तत्र वसन् सुनिर्वृतम् ॥१६

कुलेऽजनिष्ठास्त्वमिह प्रतिष्ठिते ह्यनार्य्यदेश कथमेतुमीहसे ।
समीयुषस्तत्र तवार्य्यसंस्कृतिस्त्वदीयसंसर्गविलोपिता[3] भवेत् ॥१७

अदन्ति मांसानि च तत्र मानवाः शरारुवत्[4] सर्वपशोर्निरन्तरम् ।
कथन्नु तेषामभिगम्य मण्डलीं ततो विमुक्तिस्तव वत्स सम्भवेत् ॥१८

---

१—मातृत्वेऽपि तत्पोषणशासनादेः तन्निघ्नत्वात् अधीश्वरीति प्रयोग ।

२—परिसर्पः परिक्रियेत्यमरः । परिसर्पणायोचितोऽर्थात् परिजनादि-परिकरणार्ह इत्यर्थ. ।

३—ससंर्गजा दोषगुणा भवन्तीति नयेन तत्ससर्गवतः तव स्वसंस्कृते. विलोपाप्तेरिति भाव' ।

४—शरारुर्घातुको हिंस्र इत्यमरः ।

पलाशिता[1] प्राणिवधात् प्रजायते तदाशिनां तेन भवेत् क्षणात्मिका ।
क्षुधो निवृत्तिः किल ते परासवो भवन्ति भक्ष्या इति सम्प्रधार्यताम् ॥१९

शरीरिणां[2] प्राणसमं न चेतरत् प्रियं त्रिलोक्यामिति सर्वसन्मतम् ।
ततः स्वकीयां इव ते मनीषिभिः सुरक्षणीया असवो नु देहिनाम् ॥२०

न यस्य[3] लोके प्रतिमा[4] प्रमादने तथैव शिष्टाचरितातिपातने ।
द्रुतं च यो भद्रमथापि मानवं स्वसेविनं नर्तयते निरर्गलम् ॥ २१

निपीय यं भ्राम्यति शुद्धधीर्जनो विसंज्ञितः स्यादमलाय पूर्वकम् ।
दिगम्बरश्चाध्वनि नृत्यति क्वचित् ततस्तदीया पशुता न संशयः ॥२२

तमासवं ज्ञानसुदीप[5]मारुतं सुशीलता चन्द्रकुहू निरन्तरम् ।
त्वमङ्ग संसेवयतां ततो नृणां कथन्तु संसर्गविवर्जितो भवेः ॥२३

इयं सुरा नाम पुरा स्वगन्धतो विधाय लोकान् वशगान् प्रतिक्षणम् ।
ततोऽनुरक्तान् व्यसनार्णवे पुनर्निपात्यतांश्चोपहसत्यनारतम् ॥२४

---

१—पलाशिता-मांसाशिता, मांसभक्षणशीलतेत्यर्थः । प्राणिवधादेव सा जायते इति भावः । तेन प्राणिवधेन क्षणात्मिकाक्षुन्निवृत्तिः । ते च परासवो भवन्तीति विभावनीयम् ।

२—प्राणतुल्य नान्यद् वस्तु प्रियमिति भावः ।

३—यस्य आसवस्येति शेषः ।

४—प्रतिमा प्रतिरूप सादृश्य वेति भावः ।

५—ज्ञानमेव सुदीपः तस्य मारुतम् । सुशीलता एव चन्द्रस्तस्य कुहू, आसवं सेवयता संसर्गात् कथं विमुक्तो भवेरिति भावः ।

यशस्यमायुष्यमथोर्जितम्भवेत् विवेकविज्ञानविधानमद्भुतम् ।
निरामिषाशित्वसुराविहायिते जितात्मता चेति विनिर्णयः श्रुतौ[1]॥२५

इति त्वमेनं मनसो हि संशयं निरूढमूलं[2] सहसा समुत्थितम् ।
निवर्तयेरङ्ग ममेह साम्प्रतं तदा परां प्रीतिमवाप्नुयामहम् ॥ २६

ततः कुमारो नलिनायतेक्षणः प्रणम्य मातुश्चरणौ कृताञ्जलिः ।
जगाद वाचं प्रकृतोपयोगिनीमृतां प्रियाञ्चाप्यमितार्थशोभिनीम्[3]॥२७

त्वदीयमादेशमिम समादराद्थावलम्बे हृदये महाव्रतम् ।
शपेऽम्ब ते पादसरोजयोरहम् कृता प्रतिज्ञेति च नात्र संशयः ॥२८

पुत्रं प्रशंसन्ति तमेव साधवो यदीयशुद्धाचरितैरहर्निशम् ।
भृशम्महानन्दसुधापगाहिनौ परं भवेतां पितरावनारतम् ॥२९

त्रयीव[4] मातर्नु तवोपदेशनत्रयी नितान्तं जनताघमर्दिनी ।
न जातु चैनामभि गृह्णतां नृणां भवेदनर्थोपगमो मनागपि ॥३०

---

१—निरामिषाशित्वादीना जितेन्द्रियतायाश्च यशः प्रभृतीनि फलानि श्रुतौ निर्णितानीति भाव. ।

२—निरूढमूल बद्धमूलमिति भाव. । यदि त्व पूर्वोक्त सशय निराकुर्याः परा प्रीतिमवाप्नुयामिति त्वन्निर्बन्धात् यथाकथञ्चित् सम्मतिप्रदानेऽपि न परा प्रीतिः । यथा सन्देहोन्मूलन स्यात् ।

३ वह्वर्थयुताम् ऋता सत्या प्रिया च वाचमुवाचेति भाव. ।

४—तवोपदेशाना त्रयी त्रयीव वेद इव जनताघमर्दिनी । एनानि स्वीकुर्वता नराणा न कदाप्यनर्थोगमः ।

इयं[1] महायामवती वसुन्धरा स्थितास्ति यस्मिन्ननु निश्चला हि सा।
महाग्रहोपग्रहतारकाचितिं विभाति येनेदमथाभ्रमण्डलम् ॥३१

यतः समुत्पन्नमिदं प्रतिष्ठितं सुरक्षितं यत्र च विश्वमद्भुतम्।
स धर्म एवास्ति समस्तदेहिनां शुभाशुभादृष्टफलेश्वरो मतः ॥३२

न जातु जह्यां तमहं सनातनं महर्षिभिः पूर्वतनैरुपासितम्।
स्वसेविलोकामरपादपोपमं प्रियं स्वधर्म्मश्रुतिभिः प्रदर्शितम् ॥३३

महार्णवे वा विपथेऽम्ब सत्पथे गमिष्यतश्चैकतमस्य सर्वदा।
सधर्ममूर्तिर्भगवान महेश्वरो ममाभिरक्षा सततं विभावयेत् ॥३४

हतो[2] निहन्त्येष च पाति रक्षितः ततो न हन्तव्य इति प्रणीतवान्।
विभुर्हि पैतामह आदिमो मनुः स्मृतौ निजायां श्रुतिवेदिसत्तमः[3]॥३५

इयं मदीये हृदयेऽम्ब पावनी यदि स्थिता रामकथामरापगा।
तदा हि नामासुरभावदूषितः कदापि न स्यामिति मे विनिश्चयः॥३६

---

१—यस्मिन् महायामवती निश्चला वसुन्धरा स्थिता येन महामहोपग्रह-तारकाचितम् अभ्रमण्डलं विभाति सधर्म इति परेणान्वयः। महान् आयामः दैर्घ्यं महायाम. तद्वतो वसुन्धरा विशेषणम्। दैर्घ्यमायाम आरोहः परिणाहो विशालतेत्यमरः।

२—अत्रार्थे मनूक्तवाक्यमनुवदति।

३—श्रुतिवेदिना मध्ये सत्तमः तद्विशेषज्ञः।

तवास्मि[1] मातः पुरतः प्रतिश्रुतिम् करोमि गाङ्गेय इवाचलामिमाम्।
यदर्जुनायोपदिदेश तद्धरिः स्मरन् वचः स्यां न पथः परिच्युतः ॥३७

कदापि[2] नाद्यां पिशितं जुगुप्सितं सुरां स्पृशेयन्न करेण वानघे।
न मे परस्त्रीमभिगन्तुमुत्सुकं भवेत्सुपुप्तावपि विद्धि मानसम् ॥३८

अथाम्ब[3] किं ते पुरतो बहूक्तिभिर्न जातु मुञ्चेयमहं महात्मभिः।
प्रदर्शितं धर्मपथं सनातन मलोभ्यभावोऽपि जैनर्निरन्तरम् ॥३९

शरीरमेतत्[4] परमात्ममन्दिरं सुनिर्म्मितं स्वात्मसुखास्पद परम्।
समः स आत्मात्र समस्तदेहिनां न भेदबुद्धिर्मम तत्र वर्तते ॥४०

इति वचनमुदारं शृण्वती सा सुतस्य
व्यपनयदपशकामङ्कमानीयसूनुम्।
शिरसि तमुपाघ्राद्वत्सला साश्रुनेत्रा
व्यतरदथशुभास्ताः स्वशिपोऽस्मै प्रसन्ना ॥४१

---

१—हे मातः तव पुरतो असमीत्यव्ययम्। गाङ्गेय इव इमामचला प्रतिज्ञा करोमि। हरि. अर्जुनाय यद्गीता वचनमुपदिदेश तद्वच. स्मरन् पथ. परिच्युतो न स्याम् इति प्रतिज्ञा स्वरूपम्।

२—मात्राशकितम् मासाशन सुरापान-परस्त्रीगमनादीनि प्रतिज्ञया परिहरति कदापीत्यनेन।

३—उभयोः ससर्ग बलवता दुर्बलस्याकर्षण भवति इत्याह-अथाम्बे त्यनेन।

४—आत्मनि स्थिता सर्वेष्वभेदबुद्धि द्रढयति-शरीरमेतदीत्यनेन।

ब्रह्मेन्द्र[1]सिद्धसुरवन्दितपादपद्मः सीतान्वितो रघुकुलोदधिपूर्णचन्द्रः।
सौमित्रिणाप्यनुगतो नवनीरदाभः पायादसौ रघुपतिः सततं भवन्तम् ४२

आनन्दाम्बुधिवर्द्धिनीमनुमतिं संप्राप्य मातुर्मुदा ।
प्रेम्णा तां प्रणनाम पादपतितःश्रीमानसौ मोहनः ॥

स्नेहाद्[2] भाविवियोगकातरधिया प्राप्तास्रदृष्ट्या तया ।
साशीर्वादमहो व्यसर्जि महता कृच्छ्रेण सोत्कण्ठया ॥४३

सार्द्धं[3] प्रयातु मनसं नवविप्रयोगप्रम्लानसुन्दरमुखेन्दुमसौ वचोभिः ।
तां प्रेयसीं सुमधुरैरथ सान्त्वयित्वा मित्रैर्वृतः कतिपयैस्तरसा प्रतस्थे॥४४

इत्थं मातुरवाप्य सम्मतिमसौ विस्मेरपद्माननः
स्निह्यत्स्वाग्रजसर्वमित्रनिवहैरभ्यर्च्यमानो मुदा ।
श्रीमान् हृद्यगुणाकरो धृतिमतां मान्यः सतामग्रणी-
र्गन्तुं लन्दनमव्रजत् मधुरवाक्[4] रम्यां पुरीं मुम्बयीम् ॥४५

इति श्रीगान्धिचरिते श्रीसाधुशरणमिश्रविरचिते
तृतीयः सर्गः समाप्तः ।

---

१—विदेशगमने तव सर्वथाभिरक्षा रघुपतिः कुर्यात् इति भगवन्तं याचते-ब्रह्मेन्द्रेत्यादिना ।

२—भाविना पुत्रवियोगेन कातरा धीर्यस्याः गमनकाले पुत्रवियोग स्यासह्यत्व महता कृच्छ्रेणेत्याह ।

३—तस्मिन् महात्मनि सातिशयप्रेम्णा सदैव गन्तुमिच्छन्तीम् प्रेयसी प्रति सान्त्वनामाह-सार्द्धमित्यादिना ।

४—तन्मधुरवचनं निसर्गसिद्धमिति भावः ।

# श्रीगान्धिचरितम्

## चतुर्थः सर्गः

अथ गुणैर्जनमानसमोहनैः प्रियतमैर्मृदुलैरतिसुन्दरैः ।
अपघनैर्वचनैश्च सुधामयैर्जनमनांसि हरन् स ययौ स्रुतौ ॥ १

क्वचिदमुं हि विलोक्य जितस्मरं नवघनोपममञ्जुलविग्रहम् ।
कलितपीतनवाम्बरकाञ्चितं हरिकलेति तदोद्दशुर्जनाः ॥ २

कुहचिदस्य निशम्य वचोऽमृतं पथि जना अनुजग्मुरमुं पुनः ।
श्रवणयोः स्वदृशोरिव सोत्सुकाः सफलताकुलितामतयश्चिरम् ॥ ३

अथ सुपर्णसमीरमहाजव सुदृढमायसनिर्मितमद्भुतम् ।
दहनजोष्णिमतप्तपयोभवैश्चलति वाष्पचयैर्यदविश्रमम् ॥ ४

---

१—जनमानसमोहनैः प्रियतमैर्मृदुलैरतिसुन्दरै सुधामयैश्च गुणैरपघनैः वचनैश्च जनमनासि हरन् स्रुतौ पदव्या ययौ । अपघनैर्वचनैश्च सुधामयैरित्यत्र विशेष्यानन्तर सुधामयैरिति विशेपणोपादानेऽपि क्रियोपादानरूपवाक्यसमाप्त्यभावात् न समाप्तपुनरात्ततेति भाव· ।

२—क्वचिदमु जितस्मर नवघनोपममञ्जुलविग्रह कलितपीतनवाम्बरकाञ्चित जनाः विलोक्य हरिकलेति उद्दद्दशु. उत्प्रेक्षितवन्त इति भावः ।

३—सुधामयवचनश्रवणे श्रवणयोस्तन्मूर्तिदर्शने दृगोः अर्थात् स्वदृगोरिव कर्णयोरपि सफलताकुलितामतय सन्त अमुमनुजग्मुः । चिर चिरकालमभिव्याप्येति भाव. ।

४—यद् यानम् सुपर्णसमीरमहाजवम् आयसनिर्मित अद्भुत सुदृढ दहनजोष्णिमतप्तपयोभवैः वाष्पचयैरविश्रम चलति ।

अतिरथादिपुरातनयानकं नवकलाकलकीलितविग्रहम् ।
त्वरितगामिनिजाध्वनिसीमितं सकलदेहभृतां सुलभं सदा ॥ ५

तपति भास्वति तीक्ष्णमरीचिभिर्वहति वा वलवन्मरुतां गणे ।
जलधरे वहु वर्षति दुर्दिने भवति यस्य गतिर्नहि विघ्निता ॥ ६

जलधिवारिदमण्डलवन्महत् भवति यस्य च गर्ज्जितमेधितम् ।
नयनयोरिव तच्छ्रवसोर्मुदा सृजति चारु चमत्कृतिमुत्तमाम् ॥ ७

इति[1] पराध्यर्यगुणं गुणिसत्तमः समवलोकयदायतवाष्पगम् ।
लघुनिकाय्य[2]निभं नवयानकं प्रतिपलं नवतामिव तद्गतम् ॥ ८

कलकलः[3] सुमहान् भवति क्षणात् तदधिरोह्यवरोहि जनाश्रयः ।
तदवधायक[4] सूचनया द्रुतं कृतसुशंखरवं[5] परिधावति ॥ ९

सकलमत्र नृणां सुखमेधते यदि न मार्गनिदर्शकधी[6]भ्रमः ।
सति तथा प्रतियत्प्रतिघाततः पतनतोऽस्य महान् जनसंक्षयः ॥१०

---

१—पराध्यर्यगुणं श्रेष्ठगुणं पराध्यग्रि-प्राग्रहर प्राग्र्याग्र्याग्रीयम ग्रीयम् । श्रेयान् श्रेष्ठ इत्यमरः । आयतं दीर्घं । वाष्पेण गच्छतीति वाष्पगम् ।

२—निकाय्यः निलयः गृहाः पुंसि च भूम्न्येव निकाय्य निलयालया इत्यमरः । यानमेव यानकम् स्वार्थे कन् ।

३—कलकलः कोलाहलः । कोलाहलः कलकलः इत्यमरः । अधिरोह्यव-रोहिजनाश्रयः आरोह्यवरोहिजनसश्रयः ।

४—अवधायकः अवधानकर्ता "गाड" इति लोके ।

५—शंख शब्दवत् रवं कृत्वा "सीटी" इति लोके ।

६—मार्गनिदर्शको लोके पैटमैन इति प्रसिद्धः ।

अपि च[1] वैद्युतवृत्तदविभ्रमात् प्रतियतोर्युगपत् पथि घट्टनात् ।
भवति चात्र हताहतता नृणां न च जनः खलु वक्तुममुं प्रभुः ॥११

जगति[2] यस्य गुणः सुखदो नृणां भवति दोषकणाङ्कित एव सः ।
न च नितान्तमसौ सृजतीश्वरो गुणमयं न च दोषमयं क्वचित्॥१२

तदधिरुह्य समं सखिभिर्ययौ त्वरितगामिरथं नवबाष्पगम् ।
भुवि पुरी प्रथितामथ नीरधेरुपतटं स समैक्षत मुम्बयीम् ॥१३

विविधरत्नमयैरिव निर्मितैः शिखरिशृङ्गनिभैरिव काञ्चनैः ।
बहुविधैरुचिरैस्सुरमन्दिरैः प[3]टहशंखमहद्ध्वनिनादितैः ॥१४

ध[4]वलतामलता नवतोल्लसत् कनकभूपितसौधकदम्बकैः ।
नभसि शारदवारिदविभ्रमै स्दधिगर्जितवद्भिरुपासितम् ॥१५

अ[5]पि च यत्र जलस्थलयानयोः स्थितिकृते रचितं सुखदं महत् ।
पथिकविश्रमधाम सुधामयं द्वयमहो श्रवसोरिव राजते ॥१६

---

१—विद्युता य. वृत्तं प्रेषयति स वैद्युतवृत्तदः । लोके "तारवाबू" प्रसिद्धः । वैद्युत इत्यत्र स्वार्थे अण् प्रत्ययः ।

२—अधिकारिभेदात् क्षीरमिवेत्यर्थः ।

३—पटहशखयोः महद्भिर्दीर्घैर्ध्वनिभिर्नादितैः मन्दिरैरिति भाव. ।

४—धवलता शुभ्रवर्णता अमलता निर्मलता नवता नूतनता चेति द्वन्द्वः । ताभिः उल्लसतां शोभमानाना कनकभूपितसौधाना कदम्बके. । उदधिगर्जितवद्भि. अतएव नभसिशरत्कालिकमेघविभ्रमविशिष्टैः ।

५—धूमयान जलयान-यातृणा कृते विरचित पथिकविश्रमधाम इति द्वय नगर्य्याः कर्णद्वयमिव विभाति ।

अमदसंख्यजनाकुलितो महान् चलदनेकरथादिसुसंकुलः।
ज्वलितवैद्युतदीपचयाश्रितो हसति यत्र च राजपथोऽनिशम् ॥१७

कुसुमसौरभलुब्धपरिभ्रमद्भ्रमर-वृन्दरवैरुपसेवितम्।
पिककुलैश्च रसालसुमञ्जरी कृतरसामितपानकलस्वनैः ॥१८

विकसितैः सरसीरुहराजिभिर्नवदलैश्च मरावलिनादितैः।
विविधरम्यमहीरुहशोभितं जयति यत्र पुरोपवनम्महत् ॥१९

परिवृता क्रयविक्रयकारिभिर्जनगणैर्जगतीतलवासिभिः।
विनिमयापगमागमिभिर्हि या विविधदैशिकवस्तुभिरुद्बभौ ॥२०

चलदनल्पमहोर्म्यधिरोपितैरधिहिरण्मयशालमथोज्वलैः।
धवलशंखकुलैः कुसुमैर्यथा जलधिरर्चयतेऽनिशमेव याम् ॥२१

अधिनिशं बहुले ज्वलतानिशम् विशदवैद्युतदीपसुराशिना।
बहुशशिभ्रमवानुदधिर्मुहुः कृतमहोर्मिरवः परिवर्द्धते ॥२२

परिवृतः स ययौ सुहृदां गणैरुदधिकूलगमारचितं महत्।
सलिलयानकृता वत राजिरं जलधिपारयियासु जनाकुलम् ॥२३

शिखरिशृङ्गवदुच्छ्रुतवीचिभिर्बहुभिरुग्रतरे सरितां पतौ।
दुरवगाहजले यदविघ्नितं व्रजति तद् जलयानमलोकयत् ॥२४

---

१—यत्र च पूर्वोक्तविशेषणविशिष्टः राजपथ. हसन् इव विभाति।

२—क्रयविक्रयकारिभिः क्रीणद्भिः विक्रीणाद्भिश्चजनैरिति भावः।

३—चलन्तीभिरनल्पमहोर्म्मिभिरधिरोपितैरधिहिरण्मयशालम् अर्थात् सौवर्णप्राकारोपरिस्थापितैः धवलशखकुलैः कुसुमैरिव जलधिः सतत या समर्चयते।

४—अलोकयदित्यस्य आरुक्षदित्यर्थः। अविघ्नितमिति क्रिया विशेषणम्।

अथ महार्णववीचिपरम्परा प्रतिहतावपि साधुगमद्भुतम् ।
चलितुमारभतातिरथं महत् सलिलयानमनल्पकलोदयम्[1] ॥२५

कतिचिदेव पदान्यभिगच्छता भृशमनेन परिभ्रमितु तथा ।
विपुलशंखरवेण[2] परिक्रमाविधिरनुष्ठित एव पुरोऽर्चने ॥२६

निशि[3] दिवाप्युभयोरथ सन्ध्ययोरविरतं व्रजतोऽस्य पयोनिधौ ।
भवति दूरगमाशु पुरःस्थितं तदपि तत्क्षणमक्षिपरोक्षगम् ॥ २७

अथ[4] विलोक्य सुनीलमणिप्रभं कुटिलकुन्तलशोभिमुखाम्बुजम् ।
नलिनसुन्दरमुन्नतनासिकं सरसविम्बफलाधरमञ्जुलम् २८

सुभगवृत्तकपोलशुचिस्मितं वृहदुरोऽतिविशालभुजम्मुदा ।
प्रियमितामृतवादिनमुत्सुकाः समभिजग्मुरमु सहगामिनः ॥२९

अथ[5] तदीयविनिन्दितकोकिलाध्वनिसुधारसपानसमुत्सुकाः ।
तमुपगम्य जना अलपंस्ततो मुमुदिरे श्रुतसूनृततद्गिरः ॥३०

---

१—अनल्पाना कलाना कौशलाना उदयः रचना यत्र ।

२—विपुल शखमिव रव कुर्वता जलयानेन कानिचित् पदान्येवाभिगच्छता तथा परिभ्रमित यथा वम्बई पुरोर्चाया तेन परिक्रमाविधिरनुष्ठितः ।

३—पयोनिधौ दिवानिशं गच्छतः अस्य जलयानस्य दूरस्थित आशु पुरस्थित भवति । तदपि क्षणादेव परोक्षदेश व्रजतीति भावः ।

४—युग्मकमिदम् । पूर्वोक्तविशेषणविशिष्ट प्रियपरिमितामृतवादिन तमभिद्रष्टु समुत्सुकाः सहगामिन. तमभिजग्मुरिति भावः ।

५—पूर्वं नयनानन्दकरं तं सादरं विलोकयामासुः कोकिलादपि मधुरं तदलाप विभाव्य शुश्रूषवः तत्र गता अलपन् इति भाव' ।

तदनु[1] लोकसमृद्धिवहुज्ञता चरमसीम्नि गता भुवि विश्रुता ।
जलदमण्डलचुम्बिगृहाञ्चिता मतिमतां प्रवरैरुपसेविता ॥२१

प्रतिदिशं मकरालयवेष्टिता, स्थलजलस्थितरक्षिसुरक्षिता ।
नयनसम्मुखमस्य गता पुरी सुरपुरीव हि लन्दननामिका ॥२२

अवतराजिरमाप्नुवतः[2] शनैः प्रवहणादवतीर्य स मोहनः ।
प्रियवयस्यवृतः पुरवासिनामगमदक्षिसरोज-विभाकरः ॥२३

अथविवेश[3] पुरीममरावतीममरपानुजवद् भुवि विश्रुताम् ।
सुभगराजपथैरुपशोभितां कनकनिर्मित-सद्मचयाञ्चिताम् ॥२४

भुवि यदस्ति[4] तदत्र विलोक्यते, यदिह नास्ति न तद् जगतीतले ।
व्यरचि विश्वसृजा निखिलक्षमा प्रतिकृतिः किमु नीरधिवेष्टिता ॥२५

---

१—इदमपि युग्मकम्-लोकसमृद्धिर्बहुज्ञतायाश्च चरमसीम्नि स्थिता भुवि विश्रुता जलदमण्डलचुम्बिगृहाञ्चिता मतिमता प्रवरैरुपशोभिता प्रतिदिशं सर्वासु दिक्षु समुद्रे वेष्टिता स्थलजलस्थितरक्षिभि. सुरक्षिता लन्दननामिका पुरी सुरपुरीव नयनगोचरमस्य प्राप्तेति भावः ।

२—अवतराजिरस्य-अवरोहणस्थानं प्राप्नवतः प्रवहणात् पोतात् सोऽवतीर्य पुरवासिनाम् अक्षिसरोजविभाकरः । इय विलोक्य अभिसूर्यः कमलानिव नयनानि विकसितान्यभूवन् ।

३—अमरावती—स्वर्ग, अमरपः=इन्द्रः । तदनुजः=उपेन्द्र इव ता पुरीम् अविशत् ।

४—यद्वस्तु अन्यत्र भूभागे विद्यते तदिहापि अवलोक्यते । यन्नेहास्ति तज्जगतीतलेऽपि न । पृथिव्या अपि समुद्रवेष्टितत्वात् विश्वसृजा तस्याः पृथिव्याः जलधिवेष्टिता प्रतिकृतिः व्यरचि किमु ।

स त्र्यम्बकस्य कृतिनः सुहृदः प्रयत्नात् ।
श्रीप्राणजीवनमवाप्यसुबन्धुमिष्टम् ।
तत्सुप्रबन्धरचितावसथः सुखेन ।
तत्राध्यगीष्ट विषयान्हृदयानुपक्तान् ॥२६

वाचा सुनृतया स्वया च वपुषः कान्त्योल्लसन्त्या भृशं ।
सद्वृत्तेन मनोहरेण परमां प्रीतिं दधच्छान्तधीः ।
नृणां कर्णविलोललोचनहृदम्भोजेष्वसौ मोहनो ।
जातः सर्वगुणैकभव्यभवनः प्रेमाश्रयो देहिनाम् ॥२७

इति श्रीगान्धिचरिते श्रीसाधुशरणमिश्रविरचिते
चतुर्थः सर्गः समाप्तः ।

---

१—त्र्यम्बकस्य तन्नाम्नः सुहृदः कृतिनः प्रयत्नात् श्रीप्राणजीवननामानं तत्रस्थं मित्रमवाप्येति भावः । ताभ्यां सुप्रबन्धेन रचितावसथः सुखेन हृदिस्थितान् विषयानध्यगीष्टेति भावः ।

२—स मोहनः शान्तधीस्तत्रत्यानां लोकानां कर्णविलोललोचनहृदयकमलेषु प्रेमाश्रयः सर्वगुणैकभव्यभवनो जातः । सूनृतया स्वया वाचा वपुषः भृशमुल्लसन्त्या स्वया कान्त्या मनोहरेण सद्वृत्तेन च परमां प्रीतिं दददिति भावः ।

# श्रीगान्धिचरितम्

## पञ्चमः सर्गः

अथ प्रतीतं पुरि तत्र कोविदास्तमीक्षितुञ्चालपितुं समुत्सुकाः ।
समाययुः शान्तधियं शुचिव्रतम् विलोक्य चालप्य बभूवुराश्रवाः[1]॥ १

कदाचिदेनं निजवाससद्मनि स्थितं सदभ्यासनिमग्नमानसम् ।
प्रवर्तनार्थं विषये निजेप्सिते समाययौ शौष्कल[2]मित्रमण्डली ॥ २

पलाशिता[3]पङ्क्सुदूरवर्तिनं विलासितापन्नगपन्नगाशनम् ।
सुरापिशाचीभयदञ्च वीक्ष्य सा, पथस्ततो भ्रंशयितुं तमब्रवीत् ॥ ३

अहो नु कच्चित् तव मानसं सखे प्रसन्नमास्ते निजकर्मसूद्यतम् ।
सुखैकमूलञ्च शरीरमीप्सितं समेधते स्वस्थमिदन्नु साम्प्रतम् ॥ ४

वपुर्यदीयं सबलं निरामयं सुखन्नु तस्यैव विवर्द्धतेऽनिशम् ।
ततोऽस्य रक्षां प्रयतः समाचरेत् शरीरमेतत् खलु सर्वसाधनम् ॥ ५

---

१—आश्रवाः अधीनाः बभूवुरित्यर्थः ।

२—शौष्कलः मासाशी । आमिषाशीतु शौष्कल इत्यमरः ।

१—पलाशिता मासाशिता एव पङ्कः ततः सुदूरवर्तिनम् । विलासिता एव पन्नगः तस्य पन्नगाशनम् गरुडम् । सुरा पिशाची भयदञ्च तं वीक्ष्य ततः पथः भ्रंशयितु तमब्रवीत् । पल मासं—पलभुन्मासयोरितिरुद्रः । स्याच्चामिषे पलमित्यमरश्च ।

हिमात्मकोऽयं विषयः समन्ततः समोष्णशीतप्रकृतेर्न शर्मदः ।
ततोऽस्य हर्तुं प्रतिकूलकारितामपेक्ष्यते चोष्णपटः सुजेमनम् ॥ ६

तयोर्द्वयोरेकतरं व्यवस्थितं नचानुयोगावसरोऽत्र दृश्यते ।
परं स जग्धौ नितरामपेक्ष्यते शरीरमेतत् परिवर्द्धते यया ॥ ७

यथामिषं शौर्य्यविवेकवर्द्धनं सुपुष्टिदं स्वस्थकरं शरीरिणाम् ।
तथा न शाका न पयो घृतं न वा फलानि नैवान्यदथापि किञ्चन ८

वपुःश्रमः कोऽपि समुत्थितो भवेन्निरस्य तं सारमथाभिवर्द्धयेत् ।
शरीरमेतद्रुचिरं निरामयं क्रियोद्यतं यत् कुरुते च जेमितम् ॥ ९

ततोऽनुभोक्तव्यमिदं समादरात् सुजेमनं तृप्तिकरं यदुत्तमम् ।
जरा पिशाची न च यत्र संभवेत् समेधते येन पराक्रमोऽनिशम् ॥१०

सुधावदेषा हि सुरामहौषधं कदापि तान् शीतमिदन्न बाधते ।
य एवमेनां नितरामुपासते प्रमोदधीशौर्य्यविशेषवर्द्धिनीम् ॥११

---

१—विषयो देशः । हिमात्मके देशे हिममतिप्रतिकूलकारि । तत्परिहारार्थम् उष्णवस्त्रम् सुभोजनमितिद्वयं अपेक्षितम् ।

२—द्वियोरपेक्षितयोरनयोर्मध्ये एकतर उष्ण भवता व्यवस्थित विलोक्यते । न तत्र प्रश्नावसरः । पर भोजने स विद्यत एवेति भावः ।

३—अथ यदि कोपि वपुः श्रम. समुत्थितो भवेत्, तदा त निरस्य जेमितं सत् मांसं सार बल अभिवर्द्धयेत् । शरीरञ्च सुन्दर निरामयं क्रियोद्यतञ्च कुरुते ।

४—जेमन लेह आहारो निघसो न्याद इत्यपीत्यमरः । येन जेमितेन ।

५—मांससाहचर्यात् सुरायाः बुद्धिस्थायाः प्रत्यक्षत्वमाश्रित्य एतदा परामर्शः । एषा सुरा महौषधम् अतएव य एना प्रमोदधी शौर्य्य विशेषवर्द्धिनीम् नितरामुपासते तान् कदापि इद इहत्यम् शीत न बाधत इत्यन्वयः ।

स्वसे[1]विनं लोकमियं समादरान्निषेवते कान्तमिवाङ्गना मुदा ।
तनोति निद्रां प्रमदाभिवर्षिणीं न चात्र चिन्ता परिखेदयेदमुम् ॥१२

रणाङ्गणे साहसमान्तरं सदा परं प्रमोदाम्बुधि वीचिसेवितम् ।
गिरां विकासं विदुषाञ्च सङ्गमे सुसेविता या कुरुते वपुष्मताम् ॥१३

वि[2]लोकितैर्यत्र गणैनुत्तमैः पुरामराणां दितिजैः सहाभवत् ।
नियोधनन्तत्र विजित्य दानवान् सुरामगृह्णिति ते सुराः स्मृताः ॥१४

द[3]क्षः सुराणां वरुणो जलेश्वरो विभाव्य तां भव्यगुणां सुपुष्टिदाम्।
कृतादरः स्वां पुरमानयद् यतो ततोऽथ नाम्ना खलु वारुणीति सा॥१५

अ[4]तो जनैर्ज्ञानबलादि काङ्क्षिभिद्व॑यं यदुक्तन्तदिहानिशं सखे ।
सुसेवनीयं हि यतो वपुर्निजं भवेद् बलिष्ठं सुभगं निरामयम् ॥१६

कृशं[5]स्त्वमङ्गैरसि दुर्वलस्तथा श्रमन्तु बुद्ध्या कुरुषे निरन्तरम् ।
ततस्त्वया ग्राह्यमिदं द्वयं मुदा न कुण्ठता कर्मसु येन ते भवेत् ॥१७

---

१—इय सुरा स्वसेविनं जन अङ्गना कान्तमिव मुदा निषेवते आनन्दाभिवर्द्धिनीम् निद्रा तनोति, न च त चिन्ता परिखेदयेदित्यत्वयः । मुच्यमानाऽपि तं जन न जहातीति भावः ।

२—समुद्रमथनकाले युध्यतोऽसुरान् विजित्य देवाः सुरामगृह्णन् ततस्ते सुर इति समाख्या प्रापुः । दैत्यास्तु न लब्धवन्त इति असुरा अभूवन् इति पूर्वपक्षत्वेन आलिखति विलोकत इत्यादिना । सुरा अस्ति एषामिति सुरा देवाः इत्यमरकोषसुधा व्याख्याया व्युत्पत्तिरस्ति ।

३—वारुणीति नाम्नः सार्थक्य दर्शयति-दक्षः सुराणामित्यादिना ।

४—सुरा मासयोः सेवने हेतुमुपसहरति-अतोजनैरित्यादिना । अत्र द्वयमिति सुरा मासयोर्द्वयम् ।

५—अनन्तरोक्तयो. तयोरभ्युपगमे अपरिहरणीय कार्यं दर्शयति-कृशस्त्व-मगे अन्त्येन च पादेन तत्फल दर्शयति कृशस्त्वमङ्गमित्यादिना । कुण्ठता मन्दता ।

अथेदृशीं वाचमुदीर्य मौनिनं प्रतीक्षमाणं मनसा स्वमुत्तरम् ।
सुहृद्गणं तं प्रतिनन्द्यमोहनो जगाद धीमान् प्रतिवाचमीप्सिताम् ॥१८

भवद्भिरित्थं यदहं प्रबोधितः कृपा मयीयं[1] भवतां शुभैषिणाम् ।
न चित्रमेतन्महतां कृपालुता निसर्गजा शैत्यमिवास्ति वारिणः ॥१९

विभाव्य यूयं मम मंगलं हृदा यदीदृशं ब्रूथ मनीषिणोऽधुना ।
तदर्थमेषोऽस्मि कृताञ्जलिर्मुहुर्भवन्तु मित्राण्यधमर्णतात्र[2] मे ॥२०

भवद्विधानां सुहृदां हितैषिणां निदेशनम्मे सुतरां शिरस्स्थितम् ।
परन्तु जग्धौ[3] मम वित्त निश्चयं स्वधर्मशुद्धाचरणानुमोदितम् ॥२१

तमो रजः सत्त्वमिति त्रिभिर्गुणैर्जगत् समुत्पादितमात्मयोनिना[4] ।
ततो गुणानामशितानुलक्षणः समुद्भवः सा प्रकृतिर्बलीयसी ॥२२

तमोरजोभ्यां[5] प्रभवन्ति जन्मिनाम् विकारभूता मनसः प्रवृत्तयः ।
ततो जनान् तत्र रतान् निरन्तरम् महान्धकूपे किल पातयन्ति ताः[6] ॥२३

---

१—इद भवता प्रबोधन मयि कृपा इति वक्तव्ये विधेयप्राधान्यात् स्त्रीत्वमङ्गीकृत्य कृपा मयीयमित्युक्तिः ।

२—अत्र भवदुपदेशविषये मम अधमर्णता ऋणग्राहितेति भावः ।

३—जग्धौ=भोजने ।

४—आत्मयोनिना ब्रह्मणा त्रिगुणात्मिकया मायया जगदुत्पादितम् तत्र भोजनानुकूला प्रकृतिर्भवतीति भावः ।

५—तत्र रजस्तमो गुणात्मके भोजनादौ ।

६—ताः मनस प्रवृत्तयः ।

शरीरिणां[1] सत्त्ववतां न कर्हिचित् विरुद्धवृत्तेरुदयो मनागपि ।
सुचक्षुषां वर्त्मनि गच्छतान्नृणां कुतोऽपि हेतोः पतनं न जायते ॥२४

न[2] चामिषं प्राणिवधात् विना स्वयं प्रजायते दृष्टमिदन्तु कुत्रचित् ।
जिजीविषा[3] नाम समस्तदेहिनां समानुरागेति विभाव्यतां[4] भृशम् ॥२५

श्रुतावहिंसा[5] परमः प्रदर्शितो वपुष्मतां धर्मनिधिः सदातनः ।
यतोऽभयम् प्राणभृतां च मङ्गलं निजात्मनि प्रेम च तेषु[6] बन्धुता ॥२६

बलं[7] हि सत्त्वादभिजायते ध्रुवं प्रवर्द्धते चाप्यमुनैव सर्वदा ।
तदेव लोकान् कुरुते चिरायुषो मनीषिणो वा सुधियो महोदयान् ॥२७

अहो सखायः खलु सत्त्वसेविनां श्रमो न जायेत शरीरजो मनाक् ।
न कुण्ठता[8] प्रत्युत कर्म्मशूरता न शीतबाधो वपुषश्च सौम्यता ॥२८

निरामिषाशित्ववतां[9] सुजन्मनां महद्बलं नासमये जरागमः ।
सदा प्रमोदामृतपूर्णता नृणां सुबुद्धिता चोत्तमसाहसं भवेत् ॥२९

---

१—सत्त्वगुणसेविनाम् विरुद्धवृत्ते रुदयः कदापि न भवति । तत्र दृष्टान्तमाह-सुचक्षुषामिति ।

२—प्राणिवधं विना मांसोनोत्पद्यते ।

३—जिजीविषा-जीवनेच्छा ।

४—विभाव्यताम् विचार्य्यताम् ।

५—वेदेऽहिंसा परमः धर्म. प्रदर्शितः । विधेयप्राधान्यात् पुंस्त्वम् ।

६—तेषु प्राणभृत्सु इति भाव. ।

७—सत्वादेव बल भवतीति भावः ।

८—कुण्ठता = बुद्धिमान्द्यम् ।

९—निरमिषमश्नन्ति ये ते निरामिषाशिनः, तेषा भावः निरामिषाशित्वम् । तद् विद्यते येषां ते निरामिषाशित्ववन्तः तेषामिति ।

न[1] हिंसितुं नाम मृगद्विजादयः कृता नरैस्तद्वशगास्त्वयंभुवा ।
सुरक्षिताः[2] सृष्टिविभूतयस्त्विमा महोपयोगा मनुजाभुवो यथा ॥३०

जगत् समुत्पाद्य चराचरात्मकं विभुः समस्ता सुगतामकल्पयत् ।
पृथक्[3]-पृथग् भक्ष्यमनेकमुत्तमम् न तत्र नृणां पिशितं विलोक्यते॥३१

पुरा[4] सुराणामसुरैस्सहाभवद्यदर्थमुग्रः समरो मुहुर्मुहुः ।
न सा सुरा सोमरसस्तु पावनः हविर्भुजां प्रीतिकरोऽमृतोपमः ॥३२

स्वसेविने दोषगणान् सुराति[5] या ततः सुरानाम बभूव सार्थकम् ।
विलोक्य तां दुर्गुणराशिमप्पतिर्[6]निनाय लोकं स्वमतो नु वारुणीम्॥३३

पिबन्ति हालामथ ये निरन्तरं महौपधन्नाम[7] विभाव्य मानवाः ।
विगर्हिताचारपरायणास्सदा भवन्ति ते कश्मलिनः[8] शयालवः[9] ॥३४

---

१—नामेति सम्भाव्ये । तथा चामरः नाम प्रकाश्य सम्भाव्य क्रोधोपगम-कुत्सन इति ।

२—विश्वसृजा मृगद्विजातयः नरैः हिंसितु न सृष्टाः अपितु सुरक्षिता इमा विश्वविभूतय. यथा मनुष्याः । विधेयस्य प्राधान्यात् स्त्रीत्वम् ।

३—विधात्रा जगदिद समुत्पाद्य तेषा भक्ष्यमपि पृथक् पृथगुपकल्पितम् । तत्र मनुष्याणा मास नोपकल्पितम् । किन्तु अन्नादिकमेवेति भावः ।

४—यदर्थं पुरा सुरैस्साकमसुराणाम्महान् समरोऽभवत् । सासुरा न, अपितु सोमरस. ।

५—सूपसर्गः सुराति ददातीति सुरा ।

६—अप्पतिर्वरुणः दुर्गुणरागित्वेन हेतुना विपमिव स्व लोक निनायेति भाव· ।

७—महौपधोपधिनापि सेव्यमाना सा दोषमेव ददाति, हालाहलमिव, अतएव हालेति नामसार्थक्यमस्या इति भाव. ।

८—कश्मलो-मोह· ।

९—शयालवः शयनशीलाः ।

क्वचिद् व्रजन्तोऽधिपथं प्रलापिनः पतन्ति ते दिग्वसना विचेतसः[1]
तदास्यपद्मानि शुनां गणो मुहुर्मुहुर्विलेढीति महद्घृणास्पदम् ॥३५

प्रचण्डकोपारुणितेक्षणा भृशं सुदीप्तकामानलदग्धचेतसः ।
प्रवृद्धलोभानृतपाशयन्त्रिता भवन्ति हाला[2]वशगा निरन्तरम् ॥३६

न भक्षयेयं पिशितं कदाप्यहं न वा पिबेय मदिरानु कर्हिचित् ।
इयं जनन्या पुरतः प्रतिश्रुतिः[3] कृता हि तां लङ्घयितुं न शक्यते॥३७

निवर्त्ततां तद् भवतां निरर्थको दुराग्रहो मां प्रति सौम्यदर्शनाः ।
मयेव युष्माभिरपि प्रवृत्यताम् सुपूजिते वर्त्मनि विश्वमङ्गले ॥३८

ततः समाकर्ण्य गिरो गरीयसीः सुसम्मतास्तस्य तदा सुहृद्गणाः।
विहाय निर्बन्धममुं समादरात् तदाश्रवत्वं प्रतिशुश्रुवुर्मुदा ॥३९

अथैकदा निर्जितमन्मथं श्रिया मनीषिणं तं समवेक्ष्य मोहनम् ।
वसत्ययं यत्र गृहे तदीश्वरी तदर्हकान्तोपयमं समैहत ॥४०

तया हि वर्य्या नगरीविभूतयो गुणादरा अप्सरसां गणा इव ।
प्रसन्ननीलाम्बुजचारुलोचना मुखेन चन्द्रद्युतय निमन्त्रिताः ॥४१

---

१—विचेतसः=विसञ्ज्ञा ।

२—हालेति सुरा, तद्वशगाः ।

३—प्रतिश्रुतिः=प्रतिज्ञा ।

ततोऽभिजग्मुः प्रमदाः पतिंवरा[1] विभासिताशामुखचन्द्ररोचिषा ।
विकाशिनीलोत्पलचारुदर्शना विलोलरम्यालकमण्डिताननाः ॥४२

विलोक्य तं सस्मितसुन्दराननं विशालभालं नवकञ्जलोचनं ।
प्रलम्बवाहुं पृथुपीनवक्षसं ननन्दुरेता मुमुहुर्मुहुर्मुहुः[2] ॥ ४३

वराङ्गना कापि सखीकराम्बुजं स्वपाणिपद्मेन दधार सोत्सुकम् ।
जगाद चेमां हरिणीदृशं मुदा, तवैष योग्यः स्मरसुन्दरो वरः ४४

बृहन्नितम्बस्य च पीनताजुषः[3] स्तनद्वयस्यापि भरेण सत्वरा ।
शनैर्व्रजन्ती समुपस्थिता परा विलोलनीलालकशोभितानना ॥४५

विलम्बमानानभितो[4] मुखाम्बुजं मधुव्रतश्रेणिमयानिवालकान् ।
समुत्क्षिपन्ती करपल्लवाञ्चलैस् तमाययौ कापि दिदृक्षयादरात्॥४६

यथा परीतो मदनोऽप्सरोगणैर्यथाशशी पूर्णकलः क्लिोडुभिः ।
तथास लावण्यनिधिश्च मोहनो वराङ्गनाभिः शुशुभेऽमितद्युतिः ॥४७

ततस्तु काचिद्रमणी प्रियम्वदा वयःस्थिता तं स्मितपूर्वमभ्यधात् ।
इहाङ्ग कन्यैव पतिम्वरा प्रियं पतिं वृणीते गुणगृध्नुरादरात् ॥४८

---

१—पतिंवराः वर्याः, पतिंवरा च वर्येत्यमरः

२—मुमुहुः—मोहमुपगताः ।

३—पीनताजुष इति बृहन्नितम्बस्य स्तनद्वयस्य चापि विशेषणम् । तत एव शनैर्व्रजन्तीति भावः ।

४—मुखाम्बुजम् अभितः उभयतः तद्योगे द्वितीयात्र ।

५—अप्सरोगणैः मदन इव उडुभिः पूर्णकलः शशीव लावण्यनिधिः स मोहनः उत्तमाङ्गनाभिः तथा शुशुभ इति योजना ।

भवन्तमेताः सुरसुन्दरीसमाः वरीतुकामा ललिताः पतिम्वराः ।
कलेन कण्ठध्वनिना तिरस्कृतान्यपुष्टवाचः सरसीरुहेक्षणाः ॥४९

समभ्युपेताः प्रथितानिजैर्गुणैः प्रशस्तवंशप्रभवाः सुकान्तयः ।
कलानिधेर्भूपतिता यथाकला महोत्सवा लोकदृशामनुक्षणम् ॥५०

अथासु कांचिद् गुणरूपसम्पदा विभाव्य योग्यां रमणीं शुचिस्मिताम्।
गृहाण यस्माद् रजनीशशाङ्कयोरिवास्त्वभिख्या ननु वामपीप्सिता॥५१

यथा वसन्तो निजया वनश्रिया घनो यथा चञ्चलया सुशोभते[1] ।
तथानया[2] सम्मिलितो भवानपि प्रतिक्षणं भूमितले विराजताम् ॥५२

स्त्रियोऽङ्ग[3] रत्नानि गुणैरनूत्तमैर्भवन्ति तैरेव नरा अपीदृशैः ।
अतोहि रत्नेन च रत्नसङ्गमः परं प्रमोदाय शरीरिणां मतः ॥५३

अथैवमाभाष्य वचांसि सोत्सुकं प्रियाणि चारूणि च सा मनस्विनी
बभूव तूष्णीं तरलायतेक्षणा समादरात् तत्प्रतिवाक्यकाङ्क्षिणी॥५४।

ततः प्रशान्तोर्मिमहार्णवोपमो न चुक्षुभेऽयं ललिताङ्गनावृतः ।
प्रलोभ्यमानोऽपि च तैः[4] किलाचलस्थितिं न तत्याज जगाद सूनृतम्॥५५

त्वया यदुक्तं हरिणाक्षि साम्प्रतं न फल्गु[5] किञ्चिन्ननु तत्र शोभने ।
कुमारभावो न ममास्ति सुव्रते गृहीतदारस्य गुरोर्निदेशतः ॥५६

---

१—सुशोभते विराजते इति पाठः ।
२—या भवान् वृणुयादिति भावः । तयेति पाठे स एवाभिप्रायः ।
३—स्त्रीपु साना बहुत्वाभिप्रायेण रत्नानीति बहुवचनम् ।
४—तैः पूर्वोक्तैर्वचोभिरिति भावः ।
५—फल्गु = असारम् । असारम् फल्गु—इत्यमरः ।

पतिव्रता नाम यथा कुलाङ्गना, तथैकपत्नीव्रतवान् कृती नरः ।
तयोर्दृशि स्त्रीपुरुषौ सुलोचने, स्वभर्तृपत्नीविषयान्न वा पृथक् ॥५७

अयं हि दाम्पत्यविधिः सनातनः सदा सदाचारमयः सुमङ्गलः ।
महर्षिभिर्यमपरैर्महात्मभिः प्रदर्शितोऽद्धा श्रुतिभिः समर्थितः ॥५८

स आदिदेवो भगवान् रघूत्तमो विमुच्य सीतामुदवोढ नेतराम् ।
तदीयमूर्तिं विरचय्य काञ्चनीम् समापयामास मख मखेश्वरः ॥५९

मयापि पत्नीव्रतमेतदुत्तमं विशुद्धभावेन सुकेशि सेव्यते ।
ततो भवत्या वचसामतिक्रमो भवेन्न दोषाय ममेति धारणा ॥६०

यथा सुतृप्ताय न रोचते मनाक् सितापि पुंसे मधुरा शुभानने ।
तथैकपत्नीव्रतशान्तचेतसे न यौवतं नाम दिवोऽप्यथागतम् ॥६१

यथार्थमेतत् समुदाहृतं मया विभावयन्त्यास्तव देवि मानसम् ।
परं प्रमोदं लभतां विचक्षणे कृताञ्जलिस्त्वां नितरां क्षमापये ॥६२

इत्थं तेन महात्मना निगदितं साध्वीव्रतं पावन
स्त्रीपुंसस्य परस्पराश्रितमिदं दाम्पत्यमूलं परम् ।
पूर्वं चाश्रुतमङ्गनाकुलमहो श्रुत्वाभवद् विस्मितं,
धन्यं भारत वर्षमित्यविरतं गायत् स्ववासं ययौ ॥६३

---

१—तयोः=पतिव्रतपत्नीव्रतयोः । स्वे ये भर्तृपत्न्यौ तयोर्विषयात् स्वरूपात् । ततः तदन्यौ स्त्रीपुरुषौ न । स्त्रियाः तु स्वभर्तुरन्यो पुरुषो न पुरुषस्य च स्वपत्न्या अन्या स्त्री नेति भावः । विषयो यस्य यो ज्ञातः तत्र शब्दादिकेष्वपीत्यमरः । विषयो गोचरे देशे तथा जनपदेपि च । प्रबन्धात् यस्य यो ज्ञातः तत्र रूपादिके पुमान् इति मेदनी ।

लब्ध्वाक्षदर्शकपदं[1] खलुतत्परीक्षापारंगतो

मतिमतां प्रवरोऽनहंयुः ।

इङ्गलैण्डभूमिपतिना गुणगृध्नुनाऽसौ

सम्मानितः स्व विषयं पुनरेतुमैषीत् ॥६४

प्रेम्णासौ पुरवासिभिः कृतिवरैः सम्मानितः सादरं

सोत्कण्ठैः सुहृदां गणैः प्रियतमैरन्वीयमानो मुदा ।

नानाद्वीपयियासुपोतनिवहैस्सम्यग् दृढैराश्रितम्

गर्जद्वीचिसहस्रसंकुलमगाद् भीमं पयोधेस्तटम् ॥६५

इति श्रीगान्धिचरिते श्रीसाधुशरणमिश्रविरचिते
पञ्चमः सर्गः समाप्तः ।

---

१—अक्षं व्यवहारं दर्शयति न्यायबोधकवचनैरितिअक्षदर्शक-मिति भावः। अथाक्षमिन्द्रियेनाद्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुम इत्यमरः।

# श्रीगान्धिचरितम्

## षष्ठः सर्गः

अथ सर्वगुणोपेतो मोहनो वदतां वरः ।
विसर्जितः सुहृद्वर्गैः पोतमारुहदुत्तमम् ॥१

कृच्छ्रेण[1] महता सर्वे स्नेहविक्लवमानसाः ।
साश्रुनेत्रा गृहं जग्मुर्वपुषा न तु चेतसा ॥२

उत्पतद्भिः[2] पतद्भिश्च कल्लोलैरतिभीषणैः ।
प्रचचाल महापोतः सांयात्रिकजनाकुलः ॥३

गिरिकूटनिभान् भङ्गानावर्तांश्च ह्रदोपमान् ।
ययावगणयन् पोतः सोऽविकम्पो रयान्वितः ॥४

अम्भोव्यूहं विदार्य्यासौ गच्छन् वेगवतां वरः ।
महामकरवद् रेजे मकरालयमध्यगः ॥५

गच्छतोऽहर्निशं तस्य ददृशे जलधेर्जले ।
मुम्बयी नगरी रम्या स्वरिव प्रतिविम्बितम् ॥६

---

१—कष्टेनेत्यर्थः ।

२—उत्पतद्भिः = ऊर्ध्वं गच्छद्भिः । पतद्भिः जलसमानतामाव्रजद्भिरित्यर्थः ।

प्रासादशिखरैः शुभ्रैः स्फटिकैरिव[1] निर्मितैः ।
अभ्रंलिहैः पताकाभिः सनाथैः समलङ्कृता ॥७

महाम्बाचरणाम्भोजरजःकणपवित्रता ।
श्रिया विभासमानेन्द्रपुरीव नवनिर्मिता ॥८

उपघट्टं व्रजन् पोतः साकं घण्टीरवेण सः ।
उच्चैः शङ्खध्वनिं कृत्वा शनैस्तत्रसमस्थित ॥९

मित्रैः कतिपयैः साकं ज्ञातिसम्बन्धिभिस्तथा ।
तमभ्यनन्दयद् ज्यायान् भ्राता तत्स्नेहविह्वलः ॥१०

अवतीर्य्य महापोतादग्रजं वीक्ष्य मोहनः ।
पादयोर्न्यपतत् प्रेम्णा तद्दर्शनमहोत्सवः ॥११

समुत्थायाङ्कमानीय शिरस्याघ्राय त मुदा ।
सिञ्चन्तमश्रुभिः स्नेहप्रभवैरभ्यसिञ्चत ॥१२

गच्छन्नध्विपथं ध्यायन् वन्द्यां स्नेहमयीमसौ ।
मातरं सहसापश्यत्[2] पुनस्सान्तर्दधेक्षणात् ॥१३

नायं स्वप्नस्तु जागर्मि न मोहो चेतनान्वितः ।
मन्ये भावनयापश्यं जननीं वत्सलामहम् ॥१४

प्रतीक्षमाणां मामम्बां स्नेहपीयूषवर्षिणीम् ।
अद्यावश्यं तु पश्येयं देवतामिव वत्सलाम् ॥१५

---

१—स्फटिकैः मणिविशेषैर्निर्मितैः प्रासादैरिवेत्यर्थः ।

२—पुनः क्षणादेव सा तिरोहिताभूदित्यर्थः ।

गृहं प्राप्तोऽपि विमना मोहनः समजायत ।
हृद्यस्य निहिताभावा विपरीता इवाभवन् ॥१६

हित्वा लोकमिमं माता परं धाम समाविशत् ।
श्रुत्वेति च्छिन्नद्रुमवन् मूर्च्छितो न्यपतत् क्षितौ ॥१७

अपश्यन् मातरं स्नेहमूर्तिं वाष्पावृतेक्षणः ।
वहिर्गमनमात्मीयं मेनेऽनर्थकरं महत् ॥१८

गुणानां स्मरतो मातुः स्नेहपीयूषवर्षिणाम् ।
विदीर्णं हृदयं तस्य वज्राहतमिवाकुलम् ॥१९

पितरि स्वर्गतेनैवं शोकस्तं पर्य्यचिक्लिशत् ।
मातरि ध्रियमाणायां लालयन्त्यामहर्निशम् ॥२०

निगृह्य शोकसंवेगं वशी धृतिमतां वरः ।
मनसा दूयमानोऽपि कर्तव्यं स्वमचिन्तयत् ॥२१

समुद्रयात्रामुद्दिश्य रूढिमार्गावलम्बिभिः ।
ज्ञातिभिश्चेतरैरेतद् धर्मनिष्ठामवेदिभिः ॥२२

वहिष्कृतोपि नाखिद्यद् धृतिमान् तत्त्ववित् स्वयम् ।
धर्मागमोक्तमखिलं शुद्ध्यर्थं व्रतमाचरत् ॥२३

लोकैर्यदर्थमिष्यन्ते पुत्राश्चापत्यरूपिणः[1] ।
तन्निवापादिकं मातुश्चक्रे वेदविधानतः ॥२४

---

१—न पतन्ति पितरोऽनेनेत्यपत्यम् । यत्कृतदानादिकर्मणा पितृणामुत्तमा गतितदपत्यमुच्यते । पुत्र शब्दस्यापि व्युत्पत्या स एवार्थोऽभिप्रेतः तथापि पितृभक्तिद्योतनाय तद्विशेषणम् ।

मुंबय्यां राजकोटेऽपि प्राड्विवाकपदोचितम् ।
व्यवहारं प्रकुर्वाणो नातुष्यत् कृतिनां वरः ॥२५

गुरोपदेशवासीयैः प्रभुसत्ताधिकारिभिः ।
वर्णभेदपरैर्नित्यमवज्ञातान्निरन्तरम् ॥२६

पशुत्वं प्रापितानेतान् निर्दयैरजितात्मभिः ।
निरागसोऽपि रुदतस्ताड्यमानानहर्निशम् ॥२७

धनिनोऽपि गृहीतस्वान् क्रियमाणान् सुदुर्विधान् ।
दासत्वनिगडैर्बद्धान् हन्यमानान् कशाशतैः ॥२८

भारतीयजनानेवं पश्यतोऽमुष्य मानसम् ।
पर्य्यम्लासीदिवाम्भोजं तुषारासारमर्दितम् ॥२९

स्वातन्त्र्यसदृशं नास्ति सुखं किमपि भूतले ।
पारतन्त्र्यात् परं दुःखं प्राणिनां न विलोक्यते ॥३०

नाथवत्वान्दुकैः सम्यक् वद्धानामिह देहिनाम् ।
पशुभ्यो न विशेषोऽस्ति परचेष्टानुगामिनाम् ॥३१

जीवितं मरणं तेषां मृतिरेव सुखास्पदम् ।
सावज्ञजीवितान्मन्ये मृत्युर्मानप्रदो नृणाम् ॥३२

एवं चिन्तयतानेन चेतसा खिद्यताखिलम् ।
प्रवासिभारतीयानां वृत्तमश्रावि दुःखदम् ॥३३

---

१—प्राड्विपाकः न्यायमार्गदर्शकः। न्यायमार्गप्रदर्शनेन व्यवहार-निर्णयकारकः भाषान्तरे—वारएण्टला ।

२—अस्य अग्रिमेण चतुर्थश्लोकेनान्वयः ।

३—एतान् इति प्रत्यक्षत्वेनोपलभ्यानित्यर्थः । बुद्धिस्थत्वेनेति भावः ।

दाक्षिणात्याफ्रिकाद्वीपवासिभारतभूनरान् ।
समुद्दिधीर्षुर्गोरण्डैः पीडितान् समचिन्तयत् ॥३४

इत्थं विमृशतस्तस्य तदुपायं महौजसः ।
तत्राभियोगवान् श्रेष्ठी कश्चिदेत्याब्रवीदिदम् ॥३५

दाक्षिणात्याफ्रिकादेशन्यायालयगतोऽधुना ।
व्यवहारपदं प्राप्तोऽभियोगो वर्तते मम ॥३६

अपेक्ष्यते मया तत्र साहाय्यं भवतां यतः ।
अभियोगे जयः स्यान्मे कीर्तिस्तेऽपि महोज्ज्वला ॥३७

इति भाषितमाकर्ण्य मोहनः पुरुषर्षभः ।
तदैवच्छद्मना तेन प्रतस्थे सुधियां वरः ॥३८

महार्णवमहावीचिप्रतिघातोच्छलद् भृशम् ।
उन्मज्जद्गिरिकूटाभं जलयानं हि तत् ययौ ॥३९

लामूसंघट्टमासाद्य विश्रम्य घटिकात्रयम् ।
जंजीबारं ततो गत्वा मोम्बासं समुपागमत् ॥४०

स्थित्वा कतिपयान्यत्र दीनानि निरगात् ततः ।
मोजाम्बिकं समासाद्य नेटालविषयं ययौ ॥४१

भारतीयनृणां तत्र गोरण्डैश्च मदोद्धतैः ।
अवज्ञा क्रियमाणां तामनुभूय सुदुःखितः ॥४२

स्वानुकूलगतीन् लोकाः सत्कुर्वन्ति पशूनपि ।
परन्तु भारतीयानां तथात्वेऽपि विमानना ॥४३

सहोपवेशनं याने शुल्कग्राह्येऽपि गण्यते ।
मत्तैरेतैर्महान् मन्तुस्तत्र दण्डो निपात्यते ॥४४

आर्यवेशवतां तत्र नराणां भारतौकसाम् ।
दर्शनं वर्जयन्त्येते भास्करस्येव कौशिकाः ॥४५

दर्शं दर्शमिमं सर्वं वृत्तान्तं लोकसेविनः ।
हृदयं मोहनस्यासीद् विदीर्णं शतधा द्रुतम् ॥४६

मया न यावदेतेषां दुःखमोक्षो विधास्यते ।
तावन्नेतो हि गन्तव्यमिति तेन स्थिरीकृतम् ॥४७

सर्वलोकसमे मार्गे यद्येषां गमनं भवेत् ।
महापराधकारित्वात्तत्र दण्डो विधीयते ॥४८

गृहीतशुल्कपत्रोऽपि वाष्पयानेषु मोहनः ।
क्वचिद्बहिष्कृतः क्वापि ताडितश्च नराधमैः ॥४९

पन्थाः सर्वोपयोगार्हो लोके सर्वत्र सर्वदा ।
भवतीति व्रजंस्तत्र मोहनो विश्वमङ्गलः ॥५०

विलोक्य रक्षिभिः क्रुद्धै राक्षसैरिव निर्दयैः ।
आहतः परिभूतोऽपि न चिक्लेश मनागपि ॥५१

शिष्टैः सहृदयैः कैश्चिदनुरुद्धोऽप्यगाधधीः ।
नाभ्ययौक्षीत् स चापश्यत्तानेतान् स्नेहचक्षुषा ॥५२

संख्याबलाभ्यामधिकास्तामसा हठधर्मिणः ।
मदमानोद्धता एते शिष्टमार्गातिवर्तिनः ॥५३

इति चेतसि निश्चित्य दुःखिनाममरद्रुमः ।
श्रीमान् गान्धिस्तदा दीनान् जनानुद्धर्तुमानसः ॥५४

दुर्बलानतिभीतांस्तान् परिक्लान्तमुखद्युतीन् ।
शोचतः स्वानि दुःखानि समितावाह्वयत्सुधीः ॥५५

सङ्घशक्तिं समुत्पाद्य तयैव बलिनोऽप्यमी ।
निःसारतृणसंहत्या वशगाः स्युर्यथा गजाः ॥५६

बिभ्यद्भ्यो भारतीयेभ्यो भय निःसार्य मोहनः ।
निर्भयान् शान्तिपथगांस्तानकार्षीद् दृढव्रतान् ॥५७

पत्तनेषु च सर्वेषु तानानाय्य समुद्यतान् ।
सहयोगं सहैतैः सः प्रत्यषेधीद् विदांवरः ॥५८

तदनुष्ठितमेवं ते विज्ञाय मनुजाधमाः ।
सम्मन्त्र्य हन्तुमीषुस्तं वैनतेयमिवाहयः ॥५९

कदाचिद् भारतादेनमागच्छन्तं तमस्विनः ।
तस्थुर्जिघांसवः पोतमार्गमावृत्य दुर्धियः ॥६०

परिवारयतो मूढान् जिघांसून् समतीत्य सः ।
निर्भयो निरगाच्छक्त्या हिमसङ्घमिवांशुमान् ॥६१

तदावासं समावव्रुः योद्धाः शस्त्रपाणयः ।
निगृह्णीत हतेत्येवं भाषमाणाः समन्ततः ॥६२

सर्वान् साम्ना समाश्वास्य भीतान् भारतवासिनः ।
गुल्मस्थानमगात् स्वेन महिम्नादृश्यविग्रहः ॥६३

तत्रस्थाधिकृताः केचिन्निर्भयत्वमलौकिकम् ।
सत्यव्रतञ्चाप्रतिममहिंसां सर्वभूतगाम् ॥६४

मैत्रीममित्रवर्गेषु स्वोचिताचारवत्स्वपि ।
मित्रेष्वपि समां वीक्ष्य बभूवुश्चकिताश्चिरम् ॥६५

प्रवर्तितस्य तेनास्य जनतान्दोलनस्य हि ।
तरोरिवाभवत्सद्यो महती बद्धमूलता ॥६६

चकम्पिरे ततः सर्वे जनताक्लेशकारिणः ।
स्वार्थिनां तत्कृते प्रायो भयमुत्पद्यते नृणाम् ॥६७

तत्कृतासहयोगोऽसावहिंसासत्यसत्कृतः ।
कम्पयामास गोरण्डान् रम्भादलमिवानिलः ॥६८

तदान्दोलनमाकर्ण्य सम्राडपि महामनाः ।
समन्त्रिमुख्यो महतीं चिन्तामाप दुरासदाम् ॥६९

उपेक्षितमदः सद्यो रूढमूल इवामयः ।
व्रजेदसाध्यतां यत्र न स्यात् काचित्प्रतिक्रिया ॥७०

ततोऽस्य दमनं युक्त्या पूर्वमेव विधीयताम् ।
वह्नेरिव प्रवृद्धस्य न तस्य प्रशमो भवेत् ॥७१

एतस्य सर्वानर्थस्य गान्धिरेव हि कारणम् ।
ततोऽस्य निग्रहः कार्यो यथा न पुनराचरेत् ॥७२

अभूतपूर्वं तद् दृष्ट्वा जनतान्दोलनं महत् ।
अहिंसाभावसम्पन्नं बिभ्युस्ते विस्मिताः परम् ॥७३

अमुष्मिन् प्रापिते कारावास सा जनता स्वयम् ।
निराश्रया विभज्येत लतेव पतिते द्रुमे ॥७४

संसदीत्थं प्रवदतः सदस्यानभ्यधात् ततः ।
सुधीश्चेम्बरलेनाख्यो मन्त्री नीतिविदां वरः ॥७५

आत्मेव सर्वभूतानामिष्टकृत् बन्धुरुत्तमः ।
नैकाकी मन्यतां तात गान्धिः सत्यव्रतो महान् ॥७६

शत्रुमित्रसमस्यास्य न भेदो बुद्धिगः क्वचित् ।
सत्यासत्यव्यवस्थायां सत्यमेवावलम्बते ॥७७

शत्रुत्वभावसम्पन्नमपि मित्रवदीक्षते ।
सदापकुर्वतां प्रेम्णा प्राणिनां हितचिन्तकः ॥७८

दीनानाथनिराधारजनानाममरद्रुमः ।
सदा चिन्तयते शान्तः तपस्वी लोकमङ्गलम् ॥७९

परेषां यत्सुखं लोके तदेवात्मसुखं महत् ।
सर्वदा मन्यते योऽसौ कथं कारामवाप्नुयात् ॥८०

मनसा कर्मणा वाचा वपुषा लोकसेवकः ।
अहिंसासत्यसम्पन्नः नायं दण्ड्यः कदाचन ॥८१

एवं सामपरैस्तथ्यैर्वचोभिः ते विबोधिताः ।
स्वमार्गं न जहुः पूरः पयसामिव वेगवान् ॥८२

अथ कारागमोदन्तो गान्धेस्तस्य महात्मनः ।
जज्वाल जनतामुष्णघृतेषु सलिलं यथा ॥८३

कारागृहं हि ते सर्वे जनताभिरपूरयन् ।
अन्नैरपथ्यैर्जठरं रोगार्ता इव गर्धनाः ॥

सबालवृद्धाः सस्त्रीकास्तदा जानपदाः किल ।
महदान्दोलनं चक्रुः शान्तिमार्गानुसारिणः ॥८४

तदद्भुतमिवालोक्य राजकार्य्याधिकारिणः ।
किंकर्तव्यविमूढास्ते दमनं साधु मेनिरे ॥८५

पुरीषवाहकत्वेऽपि विनियुक्तो मनागपि ।
विमना नाभवत् साधुः प्रीतात्मा समजायत ॥८६

पातनाद् भग्नदन्तस्तु कदाचित् करुणार्णवः ।
प्रहर्तॄन् स्वानिवापश्यत् प्रसन्नवदनाम्बुजः ॥८७

यातनाभिरुदग्राभिर्बाध्यमानोऽप्यहर्निशम् ।
न जहौ मोहनो धैर्य्यं बभूव च दृढव्रतः ॥८८

महिमानं विलोक्येत्थं तस्यालौकिकमद्भुतम् ।
विविदुर्गान्धिनं सर्वे कलामिव हरेरमुम् ॥८९

इत्थं विभाव्य वशिनां प्रथमस्य तस्य,
सर्वेषु भूतनिवहेषु समप्रवृत्तिम् ।
लोकोत्तरञ्च महिमानममर्त्यभावम्,
तं मेनिरे कृतिगणा भगवद्विभूतिम् ॥९०

न खलु वयमिदानीं शक्नुमो दण्डभीत्या,
व्यवसितमदसीयं चापनेतुं कथञ्चित् ।
तदिह सपदि कारावासमुक्तिस्तु गान्धे-
रयमिह ननु पन्थाः शोभनः श्रेयसे नः ॥९१

एवं विमृश्य सचिवैः सह चक्रवर्ती,
श्रीमानसौ नृपगणैः परिवन्द्यमानः ।
विख्यातकीर्तिमथ पञ्चमजार्जभूपः
सम्पूज्य सादरमिमं विससर्ज भक्त्या ॥९२

दूरीकृत्य स निर्बलेषु बलिनां वर्णप्रभेदोद्भवं,
लोकानर्थकरं कुचक्रमखिलं संस्थाप्य सत्त्व समम् ।
दासत्वान्दुकवद्धदुर्विधजनान् कृत्वा विमुक्तान् जय-
श्रीदाम्नासमलङ्कृतः परिजनैरागात् समं भारतम् ॥९३

इति श्रीगान्धिचरिते महाकाव्ये श्रीसाधुशरणमिश्र-
विरचिते षष्ठः सर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## सप्तमः सर्गः

अथ प्रसन्नेन्दुमरीचिरम्यैर्यशोभिरापूर्य्य समस्तलोकम् ।
समागमद् विश्वजनीनकर्मा, ताम्मुम्बयीं सर्वगुणैर्वरिष्ठाम् ॥ १

आपन्नकल्पद्रुममागतं तं, श्रुत्वा शरण्यं शरणार्थिपुंसाम् ।
प्रेम्णाभ्यनन्दद् जयघोषपूर्वं, तं गान्धिनं सा जनता तदानीम् ॥ २

अनन्तगाम्भीर्य्यमगाधसत्त्वं, तपःप्रभोद्भासितदिव्यमूर्तिम् ।
नेत्रैस्तृषार्तैरिव निर्निमेषैर्लोकाः पपुस्तं नभसीव चन्द्रम् ॥ ३

विलोक्य लोका अतिमर्त्यमस्य, कर्मानवद्यं जगतो हिताय ।
बभूवुराश्चर्य्यरसाभिमग्नास्तदा महात्मायमिति प्रतीयुः ॥ ४

प्रक्षीयमाणं नितरां समीक्ष्य, निराश्रयं भारतवर्षमेतत् ।
नरत्रयी तस्य हिताय वेश्मस्तम्भत्रयीव प्रथिता बभूव ॥ ५

श्रीगोखलेश्रीयुतमालवीयश्रीलोकमान्येत्युपनामयुक्ता ।
नेतृत्रयी नीतिपथस्य जाता पाणिन्युपज्ञस्य मुनित्रयीव ॥ ६

विधारितं तैरथ सुप्रयत्नात्, प्रभज्यमानं प्रभया विहीनम् ।
विलुकण्ठकैस्तन्मुषितं समन्ताद्, वृक्षं हि निःशाखमिवातिदूनम् ॥ ७

तदीयमुद्धारमसाध्यमेषां त्रयीनराणां मनसा विभाव्य ।
दुष्पारचिन्तार्णववीचिमग्ना मेने च गान्धिं तरणिं समर्थाम् ॥ ८

श्रुत्वागतं याम्यदिगन्तरीपजयश्रियाश्लिष्टतनुं विभाव्य ।
देशोद्धृतौ योग्यममुं तदासौ, तदन्तिकं गन्तुमना बभूव ॥ ९

सकञ्चुकोष्णीषमनोज्ञवेशास्तेजःप्रकर्षैः परितो ज्वलन्तः ।
ब्रह्माच्युतेशा इव स्वैर्गुणैस्ते ययुर्निकेतं किल मोहनस्य ॥१०

आजानुबाहुं सरसीरुहाक्ष, विशालभालं नव नीरदाभम् ।
कृतावदानोत्थयशः परीत, प्रशान्तभाव तपसेध्यमानम् ॥११

सत्यव्रतं नीतिविदां वरिष्ठं, विपश्चिदग्रेसरमद्वितीयम् ।
तं मोहनं ते ददृशुः सुधीन्द्रा विचिन्तयन्तं भरतावनेः शम् ॥१२

समागतांस्तान् स्वगुणैः प्रतीतान्, समुन्निनीषून् खलु भारतं स्वम्।
रसाभिलीनां धरणीमिवोत्कान् ब्रह्मेशविष्णुप्रतिमानपश्यत् ॥१३

दिव्याकृतीस्तान् समवेक्ष्य धीमान्, जहौ वृषी स्वां स समुत्थितःसन्।
नतेन मूर्ध्ना प्रणनाम सर्वान्, त्रिःस्वागतं चाथ जगाद भक्त्या ॥१४

महात्मना तेन समर्चितास्ते, पाद्यार्घदानाद्युचितक्रियाभिः ।
रेजुः सुरेशा इव सूपविष्टाः, कृतीश्वरास्तत्र वरासनेषु ॥१५

प्रीत्योल्लसच्चारुविलोचनोऽसौ तेषां निदेशाच्च निजासनस्थः ।
कृताञ्जलिस्तान् विनयावनम्रो, मितं प्रियं सस्मितमाजगाद ॥१६

अनुग्रहोऽयं भवतां महीयान्, निजाङ्घ्रिपाथोजसमर्पणेन ।
स्यात् श्रेयसे देहवतां नितान्तं, समागमो नीतिविदां वरेण्यः ॥१७

महात्मनां सङ्गतिरेव लोके, सर्वाधिकाभीष्टफलप्रदात्री ।
यत्सेविनः संतमसं निरस्य, प्रदीपवद् ज्ञानमुदेति जन्तोः ॥१८

महन्महामोहनिशाविभातं, शरीरिणां क्लेशतमः प्रदीपम् ।
भव्यं भवद् दर्शनमेतदद्य, प्राप्यास्ति भद्राः कृतकृत्यता मे ॥१९

लोकोपकारव्रतिनां न किञ्चित्, निमित्तमास्ते भवतां ततोऽन्यत् ।
क्वचिद् गतावित्थमवैमि धीरा एषा तु पृच्छा ननु तद्विशेषे ॥२०

अतो निजाभ्यागमहेतुना मे, प्रबोधितस्याङ्ग महार्थसिद्धिः ।
तदेव पुंसां सफलं जनुः स्यात् यल्लोकदुःखापनुदं समन्तात्॥२१

अथावदद् मेघगभीरकण्ठध्वनिर्मनीषी निखिलागमज्ञः ।
गोपालकृष्णो जगतीतलस्थविद्वत्सुमान्यः प्रथमोयमासीत् ॥२२

धन्या वयं यद् भवतामिदानीं लोकार्तिनीहारविभाकराणम् ।
पुण्यं परं दर्शनमेतदद्य, सं प्राप्नुमो दुष्कृतदाववर्षम् ॥२३

अत्रागमे केवलमेव कश्चिन् नार्थोऽस्मदीयोऽपि तु लोकसेवी ।
ततस्तमाकर्ण्य प्रतिक्रियां त्वं, यथोपयोगं कुरुतादिदानीम् ॥२४

अथेह लोके बहवो नु सन्ति देशा महान्तो लघवश्च तेषाम् ।
मध्ये तु नादर्शि कुतोऽपि कश्चित्, विपत्पयोधौ पतितो यथायम्॥२५

पुरा सखे लोकगुरुर्जगत्याम्, बभूव नो भारतवर्षमेतत् ।
तदेव सम्प्रत्यतिदुर्विधं सद्, गर्ह्यत्वमेतीति न दृश्यते किम् ॥२६

ऋद्धिं यदीयां महतीं विभाव्य विसिष्मिये नाम सुरेशवृन्दैः ।
दारिद्र्यदावानलदग्धमेतत् सर्वैस्तु लोकैः परिभूतमास्ते ॥२७

सर्वामराणामधिपोऽपि यस्मिन् अर्थित्वमाप्नोदसकृन्महेन्द्रः ।
क्षुत्क्षीणयाचद्जनपूर्णमेतन् निःसत्त्वमेतर्हि विभाति नित्यम् ॥२८

अनेकशो दैत्यगणैः सुराणाम्, सार्द्धं यदाभूत् समरोऽतिभीमः ।
तदार्थिता अस्य नृपेश्वरास्तैर्गत्वा पपुः स्वश्च रिपूंश्च जिग्युः ॥२९

परं त्विदानीं परतन्त्रमेतत्, निःसारतुण्याभमनल्पदैन्यम् ।
दिवानिशं कांदिशिक हताशं स्वरक्षणे चाप्यसमर्थवीर्य्यम् ॥३०

महर्द्धिभिः स्वर्गसमं यदासीद्, रमानिवासं स्पृहणीयशोभम् ।
तदाक्रमद्भिर्विषयान्तरस्थैर्नृपैरिव क्षेत्रमजैर्विलूनम् ॥३१

इदं पुरासर्वकलानिधानम्, सद्ज्ञानविज्ञानकृताभिषेकम् ।
वैदेशिकैस्तु चक्रभूमिपैस्तद् शून्याटवीवद् हृतसारमद्य ॥३२

यां यामदो दुर्गतिमापदुग्रां तां तामहं वक्तुमल न जातु ।
न स्वेच्छया यत्र गृहेऽपि वक्तुम् गन्तुं न शक्तिः किमु तत्र वाच्यम् ॥३३

आसीद् यदानन्दरसोर्मिमग्नं, पराक्रमौदार्य्यगुणैः प्रतीतम् ।
क्रन्दज्जनार्तस्वरपूर्णमद्य, गतासुवन्निष्क्रियमेतदस्ति ॥३४

चिरादिदं चानुभवद् विगर्ह्यां, दशामसह्यां परवन्नितान्तम् ।
भवेत् स्वतन्त्रं नु यथाशु धीमन् तथा नरव्याघ्र यतस्व कामम् ॥३५

या भारतीयैर्निजदेशरक्षाकृते समस्थापि जनैरशेषैः ।
महासभेति प्रथिना हि राजाऽनुमोदिना तां परिवर्द्धयस्व ॥३६

एवं विधां वाचमुदीर्य्य तस्मिन् निवृत्तवाक्ये व्यथितः फणीव ।
श्वसन् रुषा दग्धुमिव त्रिलोकीं क्षुभ्यन्महाम्भोधिरिवाप्रकम्प्यः ॥३७

सर्वांगमारण्यमहामृगेन्द्रः स लोकमान्यस्तिलको मनस्वी ।
श्रीबालगङ्गाधरनामधेयः, प्राप्तक्रमोऽवोचदगाधसत्त्वः ॥३८

असूयया वा सुमतेरभावात् परस्परेर्ष्याजनितात्मभेदम् ।
विज्ञाय भूपाः विषयान्तरस्थाः, आचक्रमुर्भारतमुन्नतं ते ॥३९

श्रीचन्द्रगुप्तेन समं यदाभूत् कौटिल्यशिष्येण तु नन्दसूनोः ।
महाहवस्तत्र विभाव्य भेदम्, सिकन्दरोऽसौ यवनाधिनाथः ॥४०

बलैर्महद्भिश्चतुरङ्गपूर्णैः सहाभ्ययासीत् किल जेतुमेतत् ।
व्रजन् स मध्येपथमेव मौर्य्यसैन्यैर्जितः सीम्नि पदं न चक्रे ॥४१

ततोऽसकृत् तेन पराजितोऽसौ, शुचेव तस्य क्षितिपेऽथ तस्मिन् ।
याते दिवं तत्पृतनाधिनाथः सेल्यूकसो नाम बभूव राजा ॥४२

स भारतं जेतुमना मनस्वी, कर्षन् स्वसेनां महतीं जवाढ्याम् ।
रणे जितो मौर्य्यनृपेण तस्मै, कन्यामुपाहृत्य निजां न्यवर्त्सीत् ॥४३

एवं शका अप्यभियायिनस्तद्, जिगीषवस्ते सुचिरं नियुध्य ।
पराजिता भोजमहीभृताद्धा, विद्रुत्य संख्यात् विषयं स्वमीयुः ॥४४

एवं यदात्रैक्यमभून्नराणां, नासीत् प्रवेशः कथमप्यरीणाम् ।
अन्योन्यमेषां विमतिर्यदाभूत्, कालात्ततः शत्रुगणाः प्रविष्टाः ॥४५

क्षितीशवृन्दार्चितपादपद्मो, धनुर्धरः पार्थ इवातिधीरः ।
पृथ्वीपतिर्नाम यदाश्वमेधं, महाध्वरं कर्तुमियेष सम्राट् ॥४६

---

१—पृथ्वीराज इति नाम्ना प्रसिद्धः ।

मातृष्वसेयो जयचन्द्रनामा, राजा न सेहे किलतत्समृद्धिम् ।
विद्वेषभावानलदग्धचेताः महम्मदं गोरिमथाजुहाव ॥४७

स कान्यकुब्जेश्वरतः प्रभूतं साहाय्यमासाद्य विवृद्धतेजाः ।
दिल्लीश्वरं श्रीपृथिवीपतिं तं समाक्रमत् सप्तदशाथवारान् ॥४८

दयालुना तेन महीश्वरेण मुक्तः पराजित्यधृतोऽपि जीवन् ।
पलाय्य भीतात् समराद् हताशः स्वराजधानीं विमना जगाम ॥४९

भूयस्ततोऽसौ जयचन्द्रराजप्रोत्साहितो विभ्यदपि प्रकामम् ।
सैन्यं समादाय छलेन गोरी चकार जन्यं महतारयेण ॥५०

विपक्षपक्षाश्रितकान्यकुब्जेश्वरोक्तदम्भेन सरन्ध्रमेत्य ।
अशक्नुवन् योद्धुममुं पुरस्थम् विवञ्च्य मित्रेण समं न्यगृह्णात् ॥५१

धनुःकलां दर्शयितुं विमुक्तस्तेनारिणा तत्सुहृदा सहासौ ।
रुद्धेक्षणोऽपि ध्वनिगेपुणास्य. छित्वा शिरोऽपातयदाशु भूमौ ॥५२

गृहीतखड्गौ सुहृदौ तदानीमन्योन्यजन्यं सहसा विधाय ।
व्युच्छिन्नशीर्षौ हि परस्परेण समीयतुर्वीरगतिं भटाग्र्यौ ॥५३

वीराग्रणीर्वीतभयोऽप्रधृष्यं क्षात्रं शरीरीव विशुद्धतेजाः ।
कुन्देन्दुनीकाशयशःसमूहैः स्वीयैर्जगद् यः समलञ्चकार ॥५४

यश्चाप्रकम्प्योऽद्रिरिव स्वधर्म्मदेशाभिरक्षाव्रतपूरितात्मा ।
लोकेऽग्निवद् दुष्प्रसहः समस्तभूपावलीवन्दितपादपीठः ॥५५

यस्यात्मतेजः शिखनाभिदग्धाः प्रतीपभूपाः सहसा प्रणम्य ।
चक्रुः स्वमौलिस्थकिरीटरत्नप्रभार्चितं पादसरोजयुग्मम् ॥५६

यो वा तदानीं यवनेशसैन्यनीहारसूर्य्यः सततं बभूव ।
धर्मस्य देशस्य च रक्षणार्थमरण्यवासीव यथा स रामः ॥५७

राणाप्रतापः स महीमहेन्द्रो देशं स्वतन्त्रं किल कर्तु कामः ।
येनान्तरायेण समीहितार्थो नाभूदसौ सा विमतिस्तदानीम् ॥५८

ततः प्रभृत्येतदभूदधीनं क्रमेण नो भारतवर्षमग्र्यम् ।
विलुण्ठकानां यवनेश्वराणां दासत्वपाशैः परितो निबद्धम् ॥५९

धनानि दारानहरन् समन्ताद् वेदान् महाज्ञाननिधानधात्नुः ।
दिव्यानि देवायतनान्यभाङ्क्षुस्तेऽतित्यजन् धर्म्मममीनृभिःस्वयम्॥६०

इत्थं परायत्तमिदं हि यावत् स्वदुःखमोक्षार्थमुपायमन्यत् ।
विचिन्तयत्येव नु तावदेतत् गोरण्डदुष्टग्रहनिगृहीतम् ॥६१

अथाधुन भारतवर्षमेतद् गोरण्डदुर्जालनिबद्धचेष्टम् ।
यां यातनामेति जनो न कश्चित् स्मर्तुञ्च तां वक्तुमलं कदाचित् ॥६२

न चात्र किञ्चिद् भवतां परोक्षं प्रत्यक्षमेतर्हि विलोक्यतेऽदः ।
यद् भारतीयान् पशुतोऽपि रेफान् पश्यन्ति नित्यञ्च निराद्रियन्ते॥६३

अतो यथेदं परतन्त्रताया मूलं हि पारस्परिको विभेदः ।
प्रोन्मूल्य सद्यो जनतासु चैक्यम् संस्थाप्य कार्य्यं निरवग्रहं तत्॥६४

यथा भवेयुर्ननु भारतीया, देशान्तरस्थैर्मनुजैः सदृक्षाः ।
अपावृताः क्लेशचयैर्विमुक्तास्तथा सतांवर्य विधेहि यत्नम् ॥६५

---

१—रेफान्=कुत्सितान्। रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गकः इत्यमरः ।

इत्थं हि सम्भाष्य वचांसि तस्मिन्, श्रीलोकमान्ये विरते मनीषी ।
धीराग्रणीर्वीतभयः सुधीन्द्रः श्रीमालवीयो निजगाद वाक्यम् ॥६६

विद्यावतां ज्ञानवतां गरिष्ठं, यशस्विनां शौर्य्यवतां वरिष्ठम् ।
पूर्वं यदासीत् किल भारतं तत् दशां निकृष्टामधुना प्रपन्नम् ॥६७

सज्ज्ञानविज्ञाननिधिं व्रतस्था, महर्षयो वेदमपौरुषेयम् ।
अधीत्य तस्याध्ययनप्रणालीम् अकल्पयन् याद्य विनाशिता सा॥६८

शिक्षैव लोकान् कुरुते सुधीन्द्रान् स्वदेशसेवाव्रतिनो वलिष्ठान् ।
यं मार्गमालम्ब्य परम्परायाः सपद्धतिः सा परिवर्तिताद्य ॥६९

परस्परेर्ष्यां जनितात्मभेदस्थाने परप्रेम सहानुभूतिम् ।
स्वतन्त्रतायां नियताञ्च वाञ्छां. शिक्षैव पुंसां जनयत्यजस्रम् ॥७०

सा चेद् विक्षिप्ता हतभाग्यता स्यात्, देशस्य तस्येति विभावनीयम् ।
तामेव नो भारतवर्षमद्य. दशां प्रपन्नं नितरां विगर्ह्याम् ॥७१

ऐतिह्यरूपं परिवर्तितं तैर्विस्मृद्धवस्तूत्कलनाद्भ्रमाढ्यां ।
निमज्जिता भारतवासिनोऽमी, स्वपूर्वजानां सह कीर्त्तिवृन्दैः ॥७२

याभिर्हि विज्ञानकलाभिरेतद्. देशस्य सर्वस्य च पूज्यमासीत् ।
ताः लन्दनस्थैरधिकारिवर्गैर्विनाशिता नोद्भव एव यासाम् ॥७३

दिव्येक्षणैस्तैर्निजपूर्वजैर्यैः, स्वाध्यायमार्गः सफलोऽभ्युपेतः ।
स एव लोकोन्नतिकल्पवृक्षः, संस्थाप्यतां देशहितैषिणोऽद्धा ॥७४

या शिक्षागमदर्शिनी सुविहिता वेदार्थसम्बन्धिनी
शिष्यान्तः प्रतिविम्बिता सपदि सा पुंसां सुधावर्षिणी ।
शुद्धां संस्कृतिमातनोति महतामाचारपूतं व्रतम्,
शौर्य्यौदार्य्यविभूषितां हि जनतारोवापरां चोन्नतिम् ॥७५

इत्थं वाचमुदीर्य्य मौनिनि गुरौ श्रीमालवीये भृशं,
गान्धिर्भारतवासिदुःखकथया संजाततापद्रवत् ।
शुद्धान्तर्नयनाश्रुणा परिणतं बिभ्रत् सतामग्रणीः,
शेषे भारतमुद्दिधीर्षुरखिलं गोरण्डदुष्ट्ग्रहात् ॥७६

स्वार्थैकनिष्ठैर्मनुजापदेशैर्दैत्यैरिवोग्रैः किल शासकैस्तैः ।
विमर्दितं राष्ट्रमिदं निरीक्ष्यगान्धिस्तदुद्धर्तुमना बभूव ॥७७

एवं स प्रतिपद्य शान्तमनसा गान्धिर्महात्मा चिराद्
बद्धं भारतवर्षमेतदखिलं दासत्वपाशैर्दृढम् ।
सद्यो मोचयितुं महास्त्रमुचितं ध्यायन्नमोघं परं
तूष्णीमास्थितवान् क्षणं कृतिमतामग्रेसरो विश्वदृक् ॥७८

इति श्रीगान्धिचरिते महाकाव्ये श्रीसाधुशरणमिश्रविरचिते
सप्तमः सर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## [ अष्टमः सर्गः ]

अथावोचदसौ धीमान् नीतिशास्त्रविशारदः ।
विबुधेन्द्रानिमान् प्रीतो महात्मा सत्यनिश्चयः ॥१

अयि विद्वद्वरा यूयं वित्तेदं हि सुनिश्चितम् ।
वैदेशिकाधिकारेऽत्र विमतिः कारणं परम् ॥२

सद्भिर्विगर्हिता धीरा लोकामङ्गलकारिणी ।
विमतिस्तु निराकार्या यतो देशस्य मङ्गलम् ॥३

या सौ महासभा लोकैरैक्योत्साहविवर्द्धिनी ।
संस्थापिता तदादेशः सर्वैरेवानुगम्यताम् ॥४

संस्थापिते तयैकत्वे, जनताशक्तिशालिनी ।
भवेदेषा हि सद्यस्तान् गोरण्डानपसारयेत् ॥५

एष एव विधिर्विज्ञा लोकाभ्युदयवर्द्धनः ।
स एव पन्था अस्माभिर्धार्य्यस्तेनाथ गम्यताम् ॥६

इति तथ्यां मितां वाच हितार्थमहितामसौ ।
आभाष्य मोहनो धीमान् विरराम महामतिः ॥७

महापुरुषवाक्येन तेन पियूषवर्षिणा ।
स्वराज्यं निकटस्थं ते मेनिरे विबुधोत्तमाः ॥८

इत्थं सभाजितानेतान् देशसेवाधृतव्रतान् ।
विससर्ज महात्मासौ महोत्साहान् मनस्विनः ॥९

ततो भारतवर्षस्य स्मारं स्मारमिमां दशाम् ।
मनसा दूयमानोऽभूद् दीनबन्धुः स मोहनः ॥१०

भारते कुत्र किं तावत् क्रियते शासकाधमैः ।
इति सर्वं मया पूर्वं विज्ञेयं तत्त्वतोऽधुना ॥११

इत्थं व्यवस्य मतिमान् स गान्धिः पुरुषोत्तमः ।
दुःखाब्धौ मज्जतो लोकान् उद्दिधीर्षुः प्रतस्थिवान् ॥१२

प्रथमं कलिकत्तां तामगात् प्राचीविभूषणम् ।
सपताकैर्महाभ्रङ्कैः प्रासादैरुपशोभिताम् ॥१३

गहद्भिरट्टैः सुश्वेतैस् ढक्काध्वनिनादितैः ।
काञ्चन्या लतयोपेतैरिन्द्रध्वजविराजितैः ॥१४

गङ्गामहोर्म्मिमालाभिः ससिक्तैः सुमनोहरैः ।
सतडिच्छारदाम्भोदैर्गर्जद्भिरिव राजिता ॥१५

यत्र मध्येदिनं गङ्गा-प्रवाहः सरितां पतेः ।
वीचिभिः पूरितो नित्य प्रतीपमभिवर्द्धते ॥१६

तत्तद्देशभवं लोकं वस्तुभाषादिकं जनः ।
यद्येकत्र दिदृक्षेत कलिकत्तामसौ व्रजेत् ॥१७

नैवं किमपि तद् वस्तु न यदत्रोपलभ्यते ।
नेहास्ति यन्न तत् क्वापि प्राप्यते यत्नतो जनैः ॥१८

अधिगङ्गं महान् सेतुर्विचित्ररचनामयः ।
यत्रानिशं स्फुरद्विद्युत्प्रदीपव्रातभास्वरः ॥१९

आकाशगङ्गाविभ्रान्तेरुपेताभिरिवाश्रितः ।
तारकाभिरनेकाभिः स्फुरन्तीभिः समन्ततः ॥२०

वायसैश्च मयूरैश्च श्वेतैर्यत्र विभासते ।
पक्षिणां निलयो रम्यश्चित्रसङ्ग्रहशोभनः ॥२१

यत्र साक्षान्महाकाली कारुण्यामृतवर्षिणी ।
लोकैरभ्यर्चिता नित्यं भक्त्या त्रिभुवनेश्वरी ॥२२

गङ्गाधिकूलमध्यास्ते तत्पुण्यसलिलार्चितम् ।
पूजोपहारबलिभिर्धूपगन्धादिभिः शुभैः ॥२३

जगन्मातुर्दयामूर्तेः पुरः पशुबलिक्रियाम् ।
पश्यन् स विव्यथे यत्र क्रियमाणां शुचिव्रतः ॥२४

जननी सर्वभूतानां सर्वलोकार्तिनाशिनी ।
कथं स्वपुत्रघातेन प्रीता स्यात् करुणालया ॥२५

ईशभालस्थबालेन्दोः कलावयवशोभिता ।
पुरीव राजराजीया यां विद्युद्दीपशोभना ॥२६

यत्र राजपथो रम्यःशृङ्गाटकविभूषितः ।
विविधैस्तु रथैर्भव्यैर्भवनैश्चाप्यलङ्कृतः ॥२७

स्वर्गागताप्सरस्तुल्यप्रमदाशतसङ्कुलः ।
क्वचिद् दिदृक्षुभिर्लोकैरसंख्येयैः समर्चितः ॥२८

इत्थं विशिष्टां स्वगुणैः प्रथितां भुवि तामसौ ।
प्रविष्टो नगरीं तत्र जनौघैरभ्यपूज्यत ॥२९

महासभासमारोहे तत्रायं पुरुषोत्तमः ।
सर्वान्नेतॄन् समामन्त्र्य मन्त्रयित्वाथ तैः समम् ॥३०

भारतोद्धारविषयं प्रास्तावीद् दृढनिश्चयः ।
भारतीयजनानाञ्च दशां सर्वां न्यवेदयत् ॥३१

यमन्ये मनसा स्मर्तुं स्वप्ने न प्राभवन् जनाः ।
शासकानां महाभीतेः पर्य्याकुलितचेतसः ॥३२

तमेव विशदीकृत्य विषयं पुरुषर्षभः ।
व्याकरोत् निर्भयःशान्तस्तदत्याचारपूरितम् ॥३३

तमेके श्रवणाद् भीताः पूर्वमेव पलायिताः ।
सभाभवनमुत्सृज्य राजभीतिविचेतसः ॥३४

केचिद् भीताननास्तत्र प्रच्छन्नास्तु जनार्णवे ।
शासकेभ्यः समुद्विग्नाः सभायामवतस्थिरे ॥३५

वाग्विद्युता समाकृष्टा मोहनस्य महात्मनः ।
धृतिमन्तस्ततः सर्वे बभूवुर्निर्भया नराः ॥३६

प्रस्तुतं विषयं तत्र मोहनेन महात्मना ।
सोल्लासं जनताः सर्वाः[१] स्वीचक्रुश्चैकबुद्धयः ॥३७

---

१—जनताः सर्वा इति कथनेन तदानीन्तनविविधनेत्रानुयायिनो विविधजनसमूहस्य ग्रहणं भवति ।

ततो वाष्यरथं धीमान् आरुह्य पुरुषर्षभः ।
पुरीं वाराणसीं शम्भोर्मुक्तिक्षेत्रं जगाम ताम् ॥३८

प्राणिपापक्षयार्थं या नगरीचापरूपिणी ।
गङ्गा ज्या शम्भुपादाब्जं शरः क्षेप्ता सतां गणः ॥३९

यत्रोत्तरमुखी गङ्गा वहन्ती सुरपूजिता ।
प्रक्षालयति पापौघं जन्मिनां जन्मनाशिनी ॥४०

महाश्मशानमानन्दकाननं गिरिजापतेः ।
अविमुक्तेश्वरश्चेति यन्नाम शिवदं नृणाम् ॥४१

अमरा अपि वाञ्छन्ति यत्र स्वप्रभवाप्ययौ ।
जीवतां ज्ञानसम्पत्तिमृतानामपुनर्भवः ॥४२

यत्र कीटाः पतङ्गाश्च पक्षिणः पशवोऽधमाः ।
महापातकिनश्चापि मृता यान्ति परं पदम् ॥४३

विना शम्भोः प्रसादं वै कः काशीं प्राप्नुयान्नरः ।
सहस्रांशुं विना लोके दिनकृत् को हि कथ्यते ॥४४

यत्र काशीति, गङ्गेति, विश्वनाथेतिवादिनाम् ।
श्रोत्रप्रियैर्नृणां घोषैरेनोराशिर्विनश्यति ॥४५

अभ्रंलिहैः स्फुरद्भव्यवैजयन्तीविभूषितैः ।
हर्म्यैर्विभासते नित्यममरेशपुरीव या ॥४६

यत्र वैश्वेश्वरं धाम सपताकं हिरण्मयम् ।
भेरीडमरुघण्टानां निनादैरुपबृंहितम् ॥४७

यत्र वेदध्वनिर्नित्यं वटूनां ब्रह्मचारिणाम् ।
सहाध्ययनशीलानाम् मधुरः सम्प्रवर्तते ॥४८

अभ्यस्य चतुरो वेदान् सर्वाङ्गैरुपबर्द्धितान् ।
धारयन्तो वसन्तीह सुधीन्द्रा लोकविश्रुताः ॥४९

क्वचित् तपस्विनां वृन्दं ज्ञानानामिव भास्वरम् ।
यस्यां मूर्तिमतां साक्षात् लोककल्याणदं महत् ॥५०

तपसा दीप्यमानानां देवतानामिवानिशम् ।
सतीनां रमणीनां या कुलेनालङ्कृता परम् ॥५१

त्रिलोक्यामपि नैवास्ति पुरी वाराणसीसमा ।
विश्वनाथसमं लिङ्गं न क्वापि श्रुतिगोचरम् ॥५२

विशुद्धज्ञानमूर्तिर्हि भगवान् शम्भुरव्ययः ।
स्वयं वसति यत्रासौ त्रिपुरारिर्महेश्वरः ॥५३

ततः काश्यभवत् सर्वविद्यानां पीठमुत्तमम् ।
विद्यार्थिभिरुपासीना पद्मिनीव मधुव्रतैः ॥५४

तस्मात् सर्वकलायाञ्च विद्यायां वागुपक्रमे ।
काश्येव काशीसदृशी न ब्रह्माण्डे परा पुरी ॥५५

काश्यां निवसतां दाक्ष्यं जगद्विस्मयकारकम् ।
यदग्रे सहसा वाचस्पतिर्वा जडतामियात् ॥५६

दक्षिणोत्तरयोर्यत्र सीमासीद्वरुणा कृता ।
ततो वाराणसी नाम्ना प्रथिता भुवि सा पुरी ॥५७

ताभ्यां सरिद्वराभ्यां सा सीमभ्यां सीमिता पुरी ।
महाक्षेत्रमभूत् काशी सर्वतीर्थोपशोभिता ॥५८

भैरवो दण्डपाणिश्च यद्रक्षाधिकृतावुभौ ।
भुजाविव शरीरस्य पक्ष्मणीव हि चक्षुषोः ॥५९

अथ केनापि भद्रेण सुधियासौ द्विजन्मना ।
यानादवतरन् दृष्टो महापुरुषलक्षणः ॥६०

अन्तर्गूढमहासत्त्वो मेघान्तर्हितमण्डलः ।
महसा भासमानोऽसौ कलानिधिरिवोज्ज्वलः ॥६१

विशालभालसुभगः स्फुटपद्मायतेक्षणः ।
दीर्घकर्णो महोरस्कः कम्बुग्रीवः स्मिताननः ॥६२

आजानुबाहुः सुनसो गम्भीरोऽब्धिरिवाश्रवः ।
गिरीन्द्र इव दुर्लङ्घ्यस्तितिक्षुर्वसुधोपमः ॥६३

स्नेहमय्या दृशा पश्यन् वदन् मधुरया गिरा ।
सत्कुर्वन् मानयन् सर्वान् दीनबन्धुत्वभावनः ॥६४

इत्थं विभाव्य सहसा तदन्तिकमुपेत्य सः ।
जगाद मधुरं वाक्यं सादरं बहुमानयन् ॥६५

स्वागतं ते महाभाग महापुरुष साम्प्रतम् ।
धन्योऽस्मि भवतां पुण्यं दर्शनं यदवाप्तवान् ॥६६

---

१--सर्वतीर्थोपशोभिता पक्ष्मणीव ।

अहमस्मि नरव्याघ्र तीर्थवासिमहीसुरः ।
धार्म्मिकागतलोकानां शुश्रूषेह मम व्रतम् ॥६७
अथाहं भवतां पुण्यं श्रोतुमिच्छामि साम्प्रतम् ।
संस्तवं श्रवणार्हं चेत् तन्मे ब्रूहि कृपानिधे ॥६८
जन्मना किं कुलं वीर, स्वेनालङ्कृतवान् भवान् ।
देशश्च नाम्नः कैर्वर्णैरनुजग्राह शोभनैः ॥६९
इति सम्प्रणय तेन पृष्टोऽसौ पुरुषर्षभः ।
स्वं निवेदितवान् सर्वं संस्तवं वाग्विदां वरः ॥७०
शृण्वन् गान्धीति तन्नाम परमानन्दसागरे ।
निमज्जन्मानसो भूत्वा प्राञ्जलिः पुनरब्रवीत् ॥७१
जन्मेदं सफलं जातं नयनेऽपि ममाधुना ।
योऽहं पुरोऽनुपश्यामि भवन्तं करुणालयम् ॥७२
स्वपरत्वविभेदोऽपि यस्मिन्नस्तं गतः सदा ।
विश्वकल्याणबुद्धेस्तद् दर्शनं यदवाप्तवान् ॥७३
वाञ्छामि भवतां पादपद्मरेणुसनाथितम् ।
स्वगृहं तन्महाभाग गमनेनानुगृह्यताम् ॥७४
प्रेमश्रद्धामयं भावं तस्य तं वीक्ष्य मोहनः ।
गन्तुं मनो दधे तत्र साधवो भक्तवत्सलाः ॥७५
तत् सद्मगमनेनास्य मनस्तोषं विधाय सः ।
सहामुना ययौ गङ्गां स्नातुं तन्महिमादृतः ॥७६

यत्स्मृतिप्रेक्षणस्पर्शनामोच्चारणजं महत् ।
पुण्यं भवति तत्स्रोतःस्नानजं किमु वर्ण्यताम् ॥७७

जगद्योनिर्महद् ब्रह्म चराचरगुरुः प्रभुः ।
यां दधौ शिरसा शम्भुः पुष्पमालामिवोत्तमाम् ॥७८

ब्रह्मक्रोधाग्निना दग्धानुद्धर्तुं किल पूर्वजान् ।
भगीरथस्तपस्तप्त्वा दुश्चरं पृथिवीपतिः ॥७९

यामनैषीद्भुवं सद्यः कलुषाद्रिविघातिनीम् ।
यत्पुण्यसलिलस्पृष्टानुद्दधार स्वपूर्वजान् ॥८०

प्रवाहाभिमुखं तस्यामवगाह्य यथासुखम् ।
देवं विश्वेश्वरं द्रष्टुं भक्तिश्रद्धासमन्वितः ॥८१

तन्मन्दिरमगाद् भव्यरजताश्चितकुट्टिमम् ।
सुवर्णरचितं हैमपताकासमलङ्कृतम् ॥८२

श्रोत्रियैर्विदुषां श्रेष्ठैर्भक्तिमद्भिस्तपस्विभिः ।
मूर्तैर्ज्ञानैरिवायातैरर्च्यमानं समन्ततः ॥८३

वेदविद्भिर्विपश्चिद्भिर्वेदपाठपुरःसरम् ।
संस्तूयमानमाहात्म्य ध्यानस्तिमितलोचनैः ॥८४

इत्थं विलोक्यश्रद्धालुर्मोहनः कृतिनां वरः ।
भक्त्या संपूज्य विश्वेशमवंदिष्ट धृतव्रतः ॥८५

शुद्धासनोपविष्टानां ध्यायन्तीनां परं शिवम् ।
निमीलितदृशां शम्भोः शक्तीनामिव निश्चलम् ॥८६

सतीत्वोज्ज्वलतेजोभिर्विभान्तीनां शुचिव्रतम् ।
रमणीनां कुलं दृष्ट्वा ननन्द नितरां कृती ॥८७

किन्तु पाखण्डिनो लुब्धान् वञ्चकान् तीर्थमुत्तमम् ।
कृमीनिव फलं विप्रात् सदोषं कुर्वतः क्वचित् ॥८८

प्रलोभ्य मिथ्यावचनैः स्त्रीपुंसौ स्वच्छमानसौ ।
लुण्ठतः क्वापि च प्रेक्ष्य स गान्धिः पर्य्यतप्यत ॥८९

यत्रागममहारण्यकेशरी वदताम्वरः ।
सर्वतन्त्रस्वतन्त्रोऽसौ महोपाध्यायशब्दभाक् ॥९०

पुंभावमाप्ता वाग् देवी पण्डितेन्द्रो महामतिः ।
मिश्रः शिवकुमारेति नाम्ना जगति विश्रुतः ॥९१

गङ्गाधरो महाप्राज्ञः सर्वविद्यापयोनिधिः ।
द्वितीय इव बाणोऽत्र कविताकामिनीपतिः ॥९२

देवीदत्तप्रसादोऽसौ देवीदत्तः सुधीश्वरः ।
कविचक्रगुरुर्धीमान् कालिदास इवापरः ॥९३

साङ्गसोपनिषद्वेदस्वाध्यायैर्व्रतचर्य्यया ।
गुरुर्ब्रह्मविदां शुक्लः शिवपूर्वो हि बालकः ॥९४

तपोनिधिर्महात्यागी वीतरागः शुचिव्रतः,
ब्रह्मर्षिवर्य्यः सत्यात्मा महात्मा तपनोऽपरः ॥९५

सर्वागमाऽटवीसिंहो द्वितीय इव भास्करः ।
ज्योतिर्विज्ञानधौरेयः कृती यत्र सुधाकरः ॥९६

एवमन्ये सुविद्वांसो ज्ञानिनः सद्भिरादृताः ।
यत्र सन्ति महात्मानस्तत्रेत्थं पद्धतिः कथम् ॥९७

क्व समाधिः परा भक्तिः सत्सङ्गो लोकसेवनम् ।
क्वैवं विडम्बना शुद्धमतीनां तीर्थगामिनाम् ॥९८

इत्येवं चिन्तयन् प्राज्ञः प्रणम्य शशिशेखरम् ।
भारतीयजनोद्धारं चेतसा समयाचत ॥९९

अथ मालविना भक्तिश्रद्धाभ्यामर्थितः कृती ।
विश्वविद्यालयं द्रष्टुं हिन्दूनां मानवर्द्धनम् ॥१००

उपभागीरथीकूलं शिष्योपाध्यायसंयुतम् ।
जनैरन्वीयमानोऽगात् सद्भिर्भद्रमिवादिशन् ॥१०१

ततो महामना विश्वख्यातो मदनमोहनः,
मालवीयो महाबुद्धिर्लोकसेवामहाव्रतः ॥१०२

मनस्वी सर्वविद्यानां निधिर्ज्ञानवताम्वरः ।
वाग्मी विजयसम्पन्नः साङ्गवेदविदाम्वरः ॥१०३

उष्णीषकञ्चुकाच्छन्नविग्रहः सोत्तरीयकः ।
सादरं प्रेमपीयूषपूर्णं स्वागतमभ्यधात् ॥१०४

गौरश्यामौ वयस्तुल्यौ महोत्साहौ मनस्विनौ ।
एकोद्देश्यौ पृथक्कार्य्यौ चक्षुरङ्घ्रीव तद्गतौ ॥१०५

दासत्वनिगडैर्बद्धभारतस्य विमुक्तये ।
यतमानौ द्विधाकायावेकात्मानौ शुचिस्मितौ ॥१०६

शरण्यौ सर्वलोकानां दीनानाममरद्रुमौ ।
ब्रह्माच्युताविवान्योन्यं मुदालिङ्गननिर्वृतौ ॥१०७

विकसद्वदनाम्भोजा नयनभ्रमराञ्चिताः ।
जनौघा अपिबन्नेतौ तृषार्तैरिव लोचनैः ॥१०८

ततो महामना वाग्मी मालवीयः सतां वरः ।
संपूज्य विधिवत्प्रेम्णा महात्मानमभाषत ॥१०९

धन्योऽस्म्यनुगृहीतोऽस्मि भवतां पुरुषर्षभ ।
दर्शनेनामुना देव लोककल्याणकारिणा ॥११०

स एव जन्मिनां श्रेष्ठः पुंसां पुरुषसत्तम ।
यो लोकानुद्धरेद् दुःखसागरोर्मिनिमज्जतः ॥१११

सुखदुःखे निजे धीमन् लोकानां सुखदुःखयोः ।
यस्य ते भवतो नित्यं न पृथक् ते मनागपि ॥११२

सुहृत् त्वमसि सर्वेषां प्राणिनां बन्धुरुत्तमः ।
शत्रुमित्रे समे यस्य सर्वत्र समदर्शिनः ॥११३

व्रतं सर्वेष्वहिंसा ते सखे शान्तिमभीप्सतः ।
न स्वल्पमपि वैषम्यं सर्वत्र समचेतसः ॥११४

धनं दारा वपुः सौख्यमात्मा ज्ञानन्तपोऽखिलम् ।
स्वाध्यायश्चेति भवता लोकोपकृतयेऽर्पितम् ॥११५

तपो महिम्ना भवतामुद्धारः स्यादसंशयम् ।
भारतस्येति शुद्धान्तः प्रमाणम्मे यशोनिधे ॥११६

तपस्विनो महाबुद्धेर्महात्मन्सर्वचेष्टितम् ।
सफलं ते सदा भूयादित्याशीर्मम साम्प्रतम् ॥११७

इत्यमभाष्य विरते मालवीये जगद्गुरौ ।
जगाद भगवान् दासो विदुषामग्रणीरुभौ ॥११८

सूर्य्याचन्द्रमसावेतौ रोदसीव महाव्रतौ ।
भारतं भासयेयाथां युवां लोकहितैषिणौ ॥११९

दीनाशरण्यलोकानां भवन्तावमरद्रुमौ ।
युवाभ्यां धीरवृत्तिभ्यामुदितं भारत भवेत् ॥१२०

ततः सत्यव्रतो धीमान् तपस्वी वदतां वरः ।
महात्मा सस्मितं वाक्यं मधुरं समुदीरयत् ॥१२१

मालवीयो महाज्ञाननिधिर्मदनमोहनः ।
गुरुर्धन्यो महाबुद्धिर्देशसेवाधृतव्रतः ॥१२२

काश्यां येन कृतो हिन्दुविश्वविद्यालयो महान् ।
नाना दिग्भ्यः समायातैः शिष्याचार्यगणैर्वृतः ॥१२३

यत्र वेदोपवेदाश्च साङ्गास्तु, निखिलानि च ।
शास्त्राणि, विविधाः सर्वे ज्ञानविज्ञानराशयः ॥१२४

पाठ्यन्ते विधिवच्छात्राः सुयोग्यास्स्युर्यथाहि ते ।
स्वपूर्वजानामार्य्याणां मर्य्यादापरिपालकाः ॥१२५

यथैषां धर्मबुद्धिः स्याद् देशसेवाव्रतात्मिका ।
लोकप्रसादिनी नाम तथा संप्रविधीयते ॥१२६

तदार्य्यगौरवं सर्वं समुत्पाद्याभिवर्द्धयेत् ।
विश्वविद्यालयोऽप्येष विश्वभूषणतां गतः ॥१२७

भारतीयप्रतिष्ठानामाश्रयो मानवर्द्धनः ।
ज्ञानविज्ञानराशीनां जन्मदोऽज्ञानमर्द्दनः ॥१२८

यथेदं भारतं भूयः स्वायत्तं साम्प्रतम्भवेत् ।
महद् वीरव्रतं स्वेषां पूर्वजानामनुस्मरत् ॥१२९

वैदेशिकान् गुरुण्डान् वा नापेक्षेत मनागपि ।
स्वातन्त्र्यसुखमात्मीयं सर्वदानुभवेदिदम् ॥१३०

तथास्माभिः शिवोदर्कः प्रयत्नः संविधीयताम् ।
येन स्यात् पुनरुत्थानं भारतस्य पुरेव तत् ॥१३१

यदन्ये ज्ञानविज्ञानकलाकलनमद्भुतम् ।
निन्युर्भारतवर्षीयं स्वदेशश्चाप्यनीनशन् ॥१३२

अथामन्त्र्य महात्मासौ पूज्यं मदनमोहनम् ।
सर्वांश्च कृतिनस्तत्र जनौघानप्युपस्थितान् ॥१३३

गन्तुं मनो दधे पूर्वं निश्चितक्रमतः कृती ।
ततो महामनाः सर्वैर्जनैः सममुदारधीः ॥१३४

सम्पूज्य विधिवत् प्रेम्णा सोत्साहं जनताप्रियं ।
अनिच्छन् चेतसेवामुं परिष्वज्य व्यसीसृजत् ॥१३५

गङ्गायमुनयोर्यत्र सहान्तःश्रोतसा शुभः ।
सङ्गमोऽस्ति त्रिवेणीति नाम्ना परमपावनः ॥१३६

तीर्थराजं प्रयागं तं पथि वर्तिनमेत्य सः ।
नत्वा च पुण्यायतनं गङ्गाद्वारमुपेयिवान् ॥१३७

तत्रामरसरित्पूरं प्रोच्छलद्वीचिशोभितम् ।
ददर्शेशजटामुक्तं नृत्यन्तमिव संमदात् ॥१३८

तत्र दिव्याश्रमान् वीक्ष्य पुण्यारण्येषु भास्वतः ।
मुनीनां शान्तमनसां द्युनदीतीरवासिनाम् ॥१३९

योगीश्वराणां ध्यानैकनिष्ठासंयोजितात्मनाम् ।
त्यक्तसर्वैषणानां स महात्मा प्रीतिमानभूत् ॥१४०

परोपकरणं सारमसारात् वपुषोऽनिशम् ।
समाहरेत् सुधीरेतदुत्तमं धर्मलक्षणम् ॥१४१

इत्थमागतलोकानां शुश्रूषा धर्ममुत्तमम् ।
समादिश्य जनान् सर्वान् तत्र संस्थामकल्पयत् ॥१४२

ततोऽधिलक्ष्मणपुरमधिवेशनमुत्तमम् ।
महासभाया आकर्ण्य ययौ तत्र निमन्त्रितः ॥१४३

गोमतीपुलिने रम्या पुरी सा चारुहासिनी ।
सौधैरभ्रंलिहैर्भव्यैर्वैजयन्तीविभूषितैः ॥१४४

क्वचिद् रथादियानानां गतागत्या समाकुला ।
महोत्सवा सदा नानालोकध्वनिसुशोभिता ॥१४५

समागतानां लोकानां मनसां हारिणा गुणैः ।
घण्टापथेन विभ्राजत्प्रभाधवलितोदरा ॥१४६

गोमतीवीचिसंदोहैः प्रक्षालिततटा शुचिः ।
भूषिता बहुभिर्घट्टैः रमणीशतसंकुलैः ॥१४७

पुरा पुरुषशार्दूलः श्रीरामः पुरुषोत्तमः ।
यां लक्ष्मणकृते रम्यां राजधानीमकल्पयत् ॥१४८

सा पुरी ददृशे तेन मोहनेन महात्मना ।
राघवेन्द्रयशोवल्लीवैजयन्तीव शोभिता ॥१४९

ततो महासभाभव्यमण्डपं रचितं नवम् ।
सर्वाशासु सुधाश्वेतप्राकारैरुपशोभितम् ॥१५०

कलावतां कलाभिश्च निर्मितैरतिसुन्दरैः ।
तोरणैश्च प्रतिद्वारं भ्राजमानैर्विभासितम् ॥१५१

क्वचित् स्तम्भैः सुधाश्वेतै राजतैरिव निर्मितैः ।
क्वापि तैश्च हरिद्राभिः काञ्चनैरिव शोभते ॥१५२

पटमण्डपराशीनां नानावर्णवताञ्चयैः ।
बहुवर्णमयं भ्राजद्वैजयन्तीसनाथितम् ॥१५३

तत्र प्राप्तं महात्मानं सुहृद्भिः स्वानुगैः समम् ।
भ्राजमानं स्वतपसा किरणैरिव भास्वतम् ॥१५४

विशालभालं सुनसं नलिनायतलोचनम् ।
विभ्राजमानमुरसा दीर्घबाहुं समोन्नतम् ॥१५५

विलोक्य जनताः सर्वा हर्षोत्फुल्लविलोचनाः ।
भक्त्या सभाजयांचक्रुर्जयघोषपुरःसरम् ॥१५६

मालवीयेन सुधिया लोकमान्येन धीमता ।
तथान्यैर्विदुषां वर्य्यैः स्वागतेनाभिनन्दितः १५७

महासमित्यध्यक्षेण वहुमानपुरस्सरम् ।
तद्‌योग्यमासनं प्रीत्या सादरञ्चाधिवासितः ॥१५८

गलदश्रुपरिम्लानवक्त्रोऽथ सुहृदा समम् ।
नाम्ना राजकुमारोऽसौ शुक्लः सन्तेन[1] संयुतः ॥१५९

चम्पारण्यस्थलोकानां नीलिभिर्दलितात्मनाम् ।
दशामशिश्रवत् तत्र हृदयोन्माथिनीन्तदा ॥१६०

महाराजस्य राजर्षेर्जनकस्य महात्मनः ।
मिथिलोपवनान्ते यत्तपःक्षेत्रं प्रतिष्ठितम् ॥१६१

वारुणागस्त्य ककुभोः सीमा नारायणी सरित् ।
नयपालस्तु कावेर्य्याः पर्वतारण्यशोभितः ॥१६२

नारायणस्य गण्डाभ्यां समुत्पन्ना सरिद्वरा ।
नारायणी गण्डकीति नामभ्यां प्रथिता ततः ॥१६३

शालग्रामशिला प्राप्तेः शालग्रामीति स्वर्गिभिः ।
मुक्तीश्वरप्रसादाच्च मोक्षदा याभिधीयते ॥१६४

हंससारसचक्राह्वकूजितैरनिशं मुदा ।
मधुरैरर्चिता काञ्चीरणितैरिव यापगा ॥१६५

---

१—सन्तरावत इति नामधेयेन व्यक्तिविशेषेण ।

तर्जयन्तीव कल्लोलकरैः कलुपसंचयम् ।
आमूलचूडं तन्नित्यं वहन्ती योपसेवते ॥१६६

वाङ्मतिः पुण्यसलिला प्राचि सीमा व्यवस्थिता ।
चम्पारण्यमितिख्यातं मण्डलं सुगुणान्वितम् ॥१६७

यत्र सोमेश्वरो देवो भगवान् शम्भुरव्ययः ।
लोकैरभ्यर्च्यते भक्त्या पार्वतीरमणोऽनिशम् ॥१६८

अरण्यराजमध्यास्ते कैलाशमिव सानुगः ।
तार्तीयनयनोत्पन्नभासेव महसा ज्वलन् ॥१६९

तिसृणां सरितां यत्र पुरासीत् संगमस्ततः ।
त्रिवेणीति तपःक्षेत्र मध्येऽरण्यं विराजते ॥१७०

दारुकायां वने यत्र ज्योतिर्लिङ्गं प्रभोज्वलम् ।
नागेशमिति विख्यातं विद्यते सिद्धसेवितम् ॥१७१

भ्रातृभिः सहितो यत्र धर्मराजो युधिष्ठिरः ।
सर्वैर्मुनिगणैः प्रीत्या सत्कृतो न्यवसत् पुरा ॥१७२

भगवान् बुद्धदेवोऽपि जन्मना स्वेन यत् पुरा ।
पावनेनानुजग्राह विभूतिमहितं ततः ॥१७३

अशोकवर्द्धनो धीमान् सर्वक्षितिपतीश्वरः ।
सर्वज्ञपादपद्मेषु भक्तिमान् कृतिनां वरः ॥१७४

भगवज्जन्मसम्बन्धात् पुण्यं तीर्थमनुत्तमम् ।
सम्भाव्य यत्र तद्धर्म्यस्तूपान् स समरोपयत् ॥१७५

तद्धर्म्म्यामृतसूक्तीनां सारं संगृह्य तेष्वसौ ।
लेखयामास शिल्पज्ञैश् चिरस्थायि मनोहरम् ॥१७६

यन्महिम्ना समाहूत इवासौ पृथिवीश्वरः ।
नन्दो यत्र स्वकामन्यां राजधानीमकल्पयत् ॥१७७

जगतीस्थितभूपालव्राजन्मौलिमणिप्रभा----
रञ्जिताङ्घ्रिसरोजोऽसौ चन्द्रगुप्तो महामतिः ॥१७८

अधिपुष्पपुरं सत्यां राजधान्यामपीश्वरः ।
यन्महिम्ना समाकृष्टः साचार्योऽध्यवसत् पुरा ॥१७९

अधुनापि ततो नन्दचन्द्रगुप्ताभिधानतः ।
भग्नाकृतिर्हि नगरी तैस्तैः चिह्नैःप्रतीयते ॥१८०

नन्दस्य च गढं राज्ञः चानकीगढ़मित्यपि ।
परम्परानुगा ख्यातिः प्रमाणं परमं मतम् ॥१८१

यानि पुण्यान्यरण्यानि तपःक्षेत्राणि भारते ।
द्वादशोक्तानि तेष्वेतत् चम्पारण्यमुदाहृतम् ॥१८२

ततो महर्षिभिः सिद्धैः तापसैश्च नृपोत्तमैः ।
सेवितं सिद्धिसदनं वनाद्रिसरिदावृतम् ॥१८३

गम्भीरसलिलस्थानां झषाणामिव जीवितम् ।
जनानां वसतां यत्र सानन्दमभवत् पुरा ॥१८४

---

१—चम्पारण्ये नन्दनगढचानकीगढेति प्रसिद्धं स्थानद्वयम् ।

तत्र साम्प्रतमुद्दण्डगोरण्डव्यवसायिनाम् ।
निरर्गलानामुत्पातैर्जनाः क्लिश्यन्ति सर्वतः ॥१८५

नीलीवृत्तिमतां तेषामत्याचारैः सुदारुणैः ।
संतापिता रुदन्तस्ते यान्ति शर्म्म न कर्हिचित् ॥१८६

प्रसह्य वसुभिः सार्कं तैः क्षेत्रहरणादमी ।
क्षुधा विशुष्यद्वदना विलपन्ति निराश्रयाः ॥१८७

निरागमोऽपि तैरेतैर्निर्दयैः पुरुषाधमैः ।
कशाभिघातविधुराः शरणं नाप्नुवन्ति ते ॥१८८

समाराधयतो लोकान् रोषारुणितचक्षुषः ।
भीतानपि दशन्त्येते सर्पा इव विषोल्वणाः ॥१८९

भिक्षोञ्छशीलधृतवृत्तिविवर्णगात्राः
प्रम्लानशुष्कवदना पशुवृत्तयस्ते ।
कङ्कालमात्रमधुना किल धारयन्तः
तैः शोषिता वनजुषो वहवो हि लोकाः ॥१९०

राजाधिकारिपुरुषा अपि निर्व्यपेक्षाः
साक्षात् कृतं तदपराधमहो सहन्ते ।
मन्ये महीशपरिषद्विहितानुवन्धाद्,
आहोस्विदेकविषयाभिनिवासभावात् ॥१९१

इत्थं हि चम्पावनिमण्डलस्था
जना विपत्तोयनिधौ निमग्नाः ।

न ते भयार्ताः शरणं लभन्ते
प्रतिक्षणं व्याकुलिता महात्मन् ॥१९२

निराश्रयाणां सुरपादप प्रभो
ततो वयं त्वां शरणं समागताः ।
महद् व्रतं नाम सतान्तदीरितं
सुरक्षणं यत् शरणं समीयुषाम् ॥१९३

यथा रविः संतमसं स्वकैः करै—
र्निरस्य विद्योतयतेऽखिलं जगत् ।
तथा भवान् स्वीयतपःप्रभावतो—
विनाश्य तान् नः सुखितान् चिरं क्रियात् ॥१९४

जनुस्त्वदीयं जनता सुखार्थं
न ते स्पृहा कापि ततोऽतिरिक्ता ।
लोकोपकारव्रतमेव धीमन्—
श्रेष्ठः सतां पुण्यतमो हि धर्मः ॥१९५

श्रुत्वा तत्परिदेवितं सकरुणं ग्राव्णोऽपि विद्रावकम्
तूष्णीं चित्र इव स्थिते हि समितौ सभ्ये परं विस्मिते ।
चम्पारण्यनिवासिदुःखकथया जातानुकम्पस्तदा
तेषां प्रत्यशृणदथोद्धृतिमसौ गान्धिर्महात्मोत्थितः ॥१९६

इति श्रीगान्धिचरिते महाकाव्ये श्रीसाधुशरणमिश्रविरचिते
अष्टमः सर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## [ नवमः सर्गः ]

ततो महात्मा श्रुतवानशेषं वृत्तं हि चेतोव्यथकं तदानीम् ।
शुक्लं समाश्वास्य कृषीवलं तं साम्नाभ्यधादर्थवतीं स वाचम् ॥१

अहिंसयोपेतमदो नु सत्यं धृत्यान्वितं चातिबलं प्रदिष्टम् ।
एतत् त्रयं संश्रयतां जनानां सर्वत्र लोके विजयः प्रसिद्धः ॥२

अस्मिन् त्रिके चात्मबलं नराणाम् उदेति यद् दुष्प्रसहं परेषाम् ।
वारीव वह्निं शमयेज्ज्वलन्तं लोकं समस्तं हि महास्त्रमेतत् ॥३

एतत् त्रयं नाम तपः पवित्रं सर्वार्थसिद्धौ सुतरां समर्थम् ।
कायेन, वाचा, मनसा, च यूयं, सेवद्ध्वमस्मात् सकलार्थसिद्धिः ॥४

गुर्वर्थमल्पाक्षरमेवमुक्त्वा, वचस्तु तस्मिन् विरते सुधीन्द्रे ।
महासभायां निखिलाः सदस्यास्तमब्रुवन् साधु यशःपरीतम् ॥५

तपोमहिम्ना भवताममीषां कृच्छ्रं विनश्येन् निखिलं जनानाम् ।
करैरिवार्कस्य तमः प्रकाण्डं किं स्यादकार्य्यं चरितव्रतानाम् ॥६

आत्मार्थसिद्धौ हि नृणां प्रवृत्तिः तत्रोत्तमं चेतसि शर्म तेषाम् ।
परार्थवृत्तिः परमं सुखं से त्येवं सतां गूढरहस्यमस्ति ॥७

शत्रौ च मित्रे च समा प्रवृत्तिर्दयालुता चापि न पक्षपातः ।
शरण्यतापन्नजनेष्वितीदं महात्मनां सौम्यनिसर्गसिद्धम् ॥८

ततो महात्मानमभापिपाताम् श्री वालगङ्गाधरमालवीयौ ।
तस्मिन् स्वकार्य्यें यदि नावपेक्षा तत्रैतुमावां प्रसितौ प्रतीहि ॥९

अथाभ्यधादाहितलक्षणोऽसौ गान्धिर्महात्मा महनीयकीर्त्तिः ।
भवच्छुभां सम्मतिमस्मि नीत्वा पुरःसरोऽनूरुरिवोष्णरश्मेः ॥१०

अथो स्थितैस्तत्र जनैरशेषैः सुसत्कृतः प्रास्थित धीर वृत्तिः ।
अत्यार्तचम्पारनवासिदुःखमोक्षं विधातुं करुणासमुद्रः ॥११

सुकर्मठानां प्रथमस्तपस्वी विहारराज्यस्य हि राजधानीम् ।
समागमत् पाटलिपुत्रमेकः पुरं प्रसिद्धं जगतीतलेऽस्मिन् ॥१२

अनेकरत्नादिमयोऽतिरम्यो यो भारतस्यास्ति विशिष्टहारः ।
ततो विहारेत्यभिधामयासीत् चेतोहरोऽयं स्वगुणैर्जनानाम् ॥१३

यत्राद्वितीयं हरिणा निपात्य गयासुरं नाम महाबलिष्ठम् ।
गयेतितीर्थ विहितं पितॄणाम् उद्धारकं स्वाङ्घ्रिसरोजलक्ष्म ॥१४

महाबलौ मागधभीमसेनौ सिंहाविवान्योन्यजयैषिणौ तौ ।
अहानि वेदैर्गुणितानि सप्त गदाहवं यत्र भटौ व्यधत्ताम् ॥१५

सुदुर्जयं तुल्यबलं विलोक्य गदाहवे तं मगधाधिनाथम् ।
कृष्णाक्षिसंज्ञामधिगम्य भीमः द्वन्द्वेन चक्रे किल कीर्तिशेषम् ॥१६

यमात्मतत्त्वस्य बुभुत्सयासौ पुरा भ्रमन् सर्वमहीं महात्मा ।
समन्तभद्रो भगवान् यदीयैर्गुणैः समाहूत इवाध्यवात्सीत् ॥१७

स पुत्रको नाम पुरा नृपोऽभूत् पत्नी तदीया किल पाटली या ।
तयोश्च नाम्नाधितटं धुनद्याः कृतं पुरं पाटलिपुत्रसंज्ञम् ॥१८

नन्दः क्षितीशः किल सार्वभौमो वभूव यत्र स्वगुणैः प्रसिद्धः ।
यत्कीर्तिराशिः शरदिन्दुगौरभासा जगद् भासयते शशीव ॥१९

यत्सौरभास्वादसुलोलुपानां विद्वद्वराणामिह सर्वदिग्भ्यः ।
गणः समेत्यालिरिवाध्यवात्सीत् लेभे ततः पुष्पपुरेति संज्ञाम् ॥२०

वर्षोपवर्षौ भुवनप्रसिद्धौ विद्वद्द्विरेफार्चितपादपद्मौ ।
निधीव[1] यस्मिन् निखिलश्रुतीनाम् आस्तां सगर्भ्यौ सुधियां वरिष्ठौ ॥२१

स पाणिनिर्यत्र तदीयशिष्यः सतीर्थ्यवर्गेषु विमुग्धबुद्धिः ।
तपोवनं तं तपसेन्दु मौलिं भक्त्या समाराधयितुं जगाम ॥२२

तपोभिरुग्रैः परया च भक्त्या संतोषिताज्ज्ञानगुरोर्गिरीशात् ।
अवाप सूत्राणि चतुर्दशासौ ज्ञानेन दिव्येन समं यथावत् ॥२३

लब्ध्वक्षरैर्भूर्यभिधेययुक्तै तैरेव सूत्रैः प्रणिनाय दिव्यम् ।
सर्वाङ्गपूर्णं किल शब्दशास्त्रं तत् पाणिनीयं प्रथितं पृथिव्याम् ॥२४

समस्तशब्दोदधिसन्निवेशाद् यस्मिन् कृते व्याकरणेऽद्वितीये ।
जनोक्तिरेषा चरितार्थिका सा सत्यं घटेऽब्धिर्निहितो हि तेन ॥२५

समस्तविद्यार्णवपारदर्शी कात्यायनस्तत्सहपाठिवर्य्यः ।
तदर्थभूतैर्निजवार्तिकैस्तत् सम्यक् प्रणीतैः समलश्चकार ॥२६

चाणक्यवात्स्यायनविष्णुगुप्तकौटिल्यनामा प्रथितो जगत्याम् ।
तेजस्विनामग्रसरस्तपस्वी यत्राभवन्नीतिविदां वरिष्ठः ॥२७

---

१—वं प्रचेतसि जानीयादिवार्थे च तदव्ययमित्यमरः ।

यो न्यायभाष्यं विशदार्थरम्यं कामार्थशास्त्रञ्च नितान्तगूढम् ।
सर्वागमारण्यमृगाधिनाथः कुशाग्रबुद्धी रचयाम्बभूव ॥२८

जडप्रवृत्तिस्तु विमुग्धबुद्धिः कश्चिद् द्विजः शम्भुमुमासमेतम् ।
आराध्य भक्त्याथ तयोः प्रसादान् महामतिर्यत्र पुरा बभूव ॥२९

स विश्ववन्द्यो महतां कवीनां गुरुर्मनीषी कविकालिदासः ।
यत्काव्यपीयूषरसप्रवाहस्वादामितानन्दमयो हि लोकः ॥३०

रघोः पृथिव्या विजयः स्वकाव्ये विहाय देशं मगधं प्रदिष्टः ।
तेनेन्दुमत्युद्वहने विशिष्य सुवर्णितोऽसौ मगधेश्वरो यत् ॥३१

ततो नु सुव्यक्तमिदं यथासौ श्रीकालिदासो मगधेऽजनिष्ट ।
तत्रापि तत् पाटलिपुत्रमेव स्वजन्मना सम्यगलञ्चकार ॥३२

आसीत् सभायां मगधेश्वरस्य श्रीकालिदासः प्रथमः कवीनाम् ।
स्वयम्वरे सर्वमहीश्वरेभ्यस्तद्गौरवं वर्णितवान्यथासौ ॥३३

इत्थं पुरा पाटलिपुत्र आसीद् विपश्चितां शास्त्रकृतां परीक्षा ।
वर्षोपवर्षौ च मुनित्रयाद्याः परीक्षिता यत्र ययुः प्रतिष्ठाम् ॥३४

गङ्गोर्मिमालारमणीयकूलं पुरं स तत् पाटलिपुत्रमेत्य ।
स्थानं स्ववासाय विनिश्चिकाय राजेन्द्रराजत्सदनं तदानीम् ॥३५

वाक्कीलवृत्याथ पुरीं प्रयाते राजेन्द्रनाम्न्युत्तरगप्रसादे ।
तस्मिन् पुरं मोदफलेति पूर्वम् शुक्लानुगोऽगात् तरसा महात्मा॥३६

---

१—पाणिनिकात्यायन प्रभृतयः ।

प्राक्सूचितस्वागमनीयकालो वीराग्रणीः श्रीकृपलानिसूरिः ।
तत् स्वागतायागतवान् सशिष्यः स वाष्पयानावतरस्य भूमिम् ॥३७

प्रातर्महात्मानमथाभ्यगच्छन् वाक्कीलमुख्या नृपनीतिनिष्णाः ।
लोकोपकारव्रतशुद्धभावाः सेनापतिं सैन्यगणा इवामुम् ॥३८

आकारितस्तेन महात्मनासौ विपश्चिदग्रेसरतां प्रयातः ।
स राजनीत्यर्णवपारगामी राजेन्द्रनामान्तिकमागतोऽस्य ॥३९

श्रीरामपूर्वो नवमीप्रसादो व्रजेतिपूर्वश्च किशोरनामा ।
दिदृक्षुभिर्लोकगणैः समेतावगच्छतां चेत्तुरिव प्रकाशम् ॥४०

इहागतोऽसौ सुगृहीतनामा गान्धिर्महात्मेति समस्तलोकाः ।
आबालवृद्धाः सहसा तमीयुर्दिदृक्षमाणाः परमादरेण ॥४१

यथांशुमन्तं समवाप्य सद्यः पद्माकरो नाम विकासमेति ।
तथा जनौघास्तमुपेत्य तत्र विकासिताशा मुदिता अभूवन् ॥४२

अन्धो यथा दृष्टिमवाप्य सद्यो भृशं प्रसीदेज्जगदीक्षमाणः ।
तथा महात्मानमवेक्ष्य सर्वे प्रीता निजोद्धारविधौ प्रतीयुः ॥४३

कल्पद्रुमं प्राप्य यथा दरिद्रः स्वकीयभाग्योदयमीहमानः ।
भवेत्तथेमं समवाप्य लोकाः स्वदुःखमोक्षे त्वभवन् धृताशाः ॥४४

स्नेहार्द्रदृष्ट्या प्रविशन्निवान्तर्माधुर्या गिरा सम्मदयन्निवैतान् ।
विषीदतस्तत्र जनानुपेतान् हितं मितं प्राह स दीनबन्धुः ॥४५

---

१—जातावेकवचनम् ।

सत्यव्रतं नाम महास्त्रमेतत्त्वहिंसया सगतमेधमानम् ।
धृत्यान्वितं चातिवलं त्रिलोक्यां न धर्षणे स्यात्प्रभुरस्य कश्चित् ॥४६
यः सर्वलोकं स्वमिवानुपश्येत् ध्यायेच्च सर्वत्र गतं परेशम् ।
स्वस्येव शत्रोरपि चिन्तयेच्छं स एव लोके विजयी जनः स्यात् ॥४७
इत्थं समाश्वास्य जनांस्तदानीं स चम्पकारण्यनिवासिपुंसाम् ।
कष्टां दशां द्रष्टुमना महात्मा प्रस्थातुमैच्छत् सहितः सुहृद्भिः ॥४८
स तीरभुक्तेरथ शासकोऽस्य द्राक् चम्पकारण्यगमं न्यषेधीत् ।
न्यजिज्ञपद् देशमिमं विहाय यथागतं गन्तुममुं तदानीम् ॥४६
निह्नोतुमिच्छोरिह नैलिकानां चम्पावनीवासिजनेषु शश्वत् ।
महापचारं वहुलीभवन्तं जहौ ततस्तस्य निदेशमेषः ॥५०
इत्थं व्यवस्याथ तपस्विवर्य्यो गान्धिर्महात्मा नितरां दयालुः ।
प्रातिष्ठतासौ दयनीयलोकक्लेशप्रहाणाय च मोतिहारीम् ॥५१
तत्रागतं मित्रगणैरूपेतं तारान्वित चन्द्रमिवानुवीक्ष्य ।
लोका महादुःखतमोनिमग्नास्तमभ्यनन्दन् मुदिताः प्रकामम् ॥५२
अथात्र कश्चित् किल शासकेभ्यो विभ्यन्निवासं स्वगृहेऽस्य दातुम् ।
नाभूदलं किन्तु वभूव भक्त्या श्रीगोरखो नाम मनस्विवर्यः ॥५३
यो निर्धनानां निधिरक्षयिष्णुर्यो निर्वलानां वलमद्वितीयम् ।
सुदुःखितानाममरद्रुमो यो मित्रारितुल्यो भुवि यो जनानाम् ॥५४
यमात्मवन्धुं प्रतियन्ति सर्वे यस्यास्ति कुत्रापि न भेदवुद्धिः ।
यो मन्यते लोकसुखं स्वसौख्यं तदीयदुःखं निजदुःखमेव ॥५५

व्यलोकयद् गान्धिरसौ समुद्रानिवागतांस्तान् त्वरया जनौघान् ।
स्त्रीबालवृद्धैः सममात्मचन्द्रं द्रष्टुम्महानन्दरसोर्म्मिमग्नान् ॥५६

प्रक्षीणकायान् श्लथितांससन्धीन् सन्नोदरान् रूक्षकचान् कुचैलान् ।
दीनाननान् भग्नगतीन् रुदद्भिः क्षुधानुयद्भिः शिशुभिश्च युक्तान् ॥५७

अप्येकतो दुःखविमोक्षहेतोः सम्प्रीयमाणान् पुनरन्यतश्च ।
भयस्मृतेः शासकदुर्ग्रहाणां सद्यः परिम्लानमुखारविन्दान् ॥५८

दुःखोर्मिमालाकुलितेऽतिभीमे निमज्जतो नॄन् विपदम्बुराशौ ।
प्राप्तं दृढं पोतमिवाशुमेत्य, स्वजीविताशाप्रमदोपगूढान्[१] ॥५९

असंस्कृतै रूक्षकचैर्विकीर्णैर्न्यासाननान् क्षीणकपोलदेशान् ।
शीर्णाम्बरान् स्वान् पृथुकान् गृहीत्वा रोरुद्यमानान् शयितान् निजाङ्के

आश्वासयन्ती रुदतीश्च कामं शोकप्रहर्षोद्द्रवदश्रुधाराः ।
समापतन्तीर्निजभाग्यकल्पद्रुमावलोकाकुलिताः पुरन्ध्रीः ॥६१

एवं जनांस्तत्र विपत्तिवारांनिधौ निमग्नान् सुतरां निरीक्ष्य ।
जातानुकम्पो व्यथितस्तदानीं दयानिधिर्दीनजनैकबन्धुः ॥६२

दुःखातिरेकाद् गलदश्रुमालः पश्यन्नवस्थां दयनीयपुंसाम् ।
निन्द्यां पशुत्वादपि साधुमार्गभाजां प्रकृत्या करुणार्द्रचेताः ॥६३

सम्वीक्ष्य सर्वां जनतामुपेतां तपोनिधिः सत्यधनो महात्मा ।
लोकार्त्तिनीहारविभाकरोऽसौ, सान्त्वं वचः सूनृतमाह धीरः ॥६४

---

१—निजजिजीविषाह्लादयुक्तानित्यर्थः ।

इमामवस्थां भवतां विलोक्य सहस्रधा मे हृदयं विदीर्णम् ।
स्वार्थैकनिष्ठैरिह शासकैर्या युष्मास्विदानीं क्रियते वियंतैः ॥६५

राज्ञः प्रजापालनमेव धर्मः स तद्विहीनः स्वपदात् च्युतः स्यात् ।
ततोऽथ तेनावहितेन सम्यक् ता रक्षणीया विविधाच्च कृच्छ्रात् ॥६६

क्षेत्रस्वदाराद्यपहारकेभ्यः पुंभ्यो वलिभ्योऽतिसमुद्धतेभ्यः ।
दुर्भिक्षप्रकृत्यादिगणाच्च नित्यं रक्षा प्रजानां नृपतेर्हि धर्मः ॥६७

विवेचकत्वादिगतेरभावात् परोक्तकारित्वमुपेत्य भूपः ।
कुर्वन् व्यलीकं नितरामसह्यं प्रजासु वाच्यत्वमुपैति सद्यः ॥६८

यल्लोकदुःखप्रदमस्ति रागद्वेषादिभिस्स्वार्थपरन्नितान्तम् ।
चौर्यानृताधर्मतमोऽनुलिप्तं दम्भात्मकं साधुविगर्हितञ्च ॥६९

एवंविधं शासनमाशु भद्रा उत्सार्य संस्थापयितुं यतध्वम् ।
तदेव भूयाद् जनतासुखार्थं यद्रामराज्य भवतामभीष्टम् ॥७०

सत्यन्नाम महाव्रतं व्रतवतां भूतेष्वहिंसा च सा,
सद्धर्मः कथितः श्रुतौ जनिमतां कल्याणकल्पद्रुमः ।
मैत्री सर्वजनेषु शान्तिमहिता स्वेषां सदा संहति-
श्चित्तामोघमिदं महास्त्रमुदितं सर्वाभिभावि क्षणात् ॥७१

तदैव तन्मण्डलशासकानामादेशपत्रं करयोरथास्य ।
समागमयत् सहसेदमाशु स्थानं परित्यज्य कुतोऽपि गन्तुम् ॥७२

---

१—धृष्टैरित्यर्थः ।

श्रुत्वैतत् तरसा नरौघजलधिः स्त्रीबालवृद्धोर्मिमान्
नानादिग्भ्य उपागतः स नितरां प्रावर्द्धताल्पक्षणात् ।
यत्पादोत्थरजश्चयैः परिवृतं मेघैरिवाच्छादितं
व्योमाभून्मलिनं तदा जनरवैरभ्युद्गतैर्व्याकुलम् ॥७३

संक्षुब्धं परितश्चलद्भुजमहाभङ्गैस्समुद्वेलितं,
पूर्वादृष्टममुं विलोक्य जनतायादःपतिं शासकाः ।
भीता विस्मितमानसाः समभवन् तस्याथ लोकोत्तरं,
माहात्म्यं भुवनाभिभावि महसामन्यन्त सर्वे तदा ॥७४

अथ निखिलजनानां भक्तिमाज्ञाय कामं,
सुहृदरिपु समेऽस्मिन नायके विश्वबन्धौ ।
व्यवसितमपि शीघ्रं स्वीयमावर्तयन्तः,
सुकलितगतयस्ते शङ्किता जोषमासन् ॥७५

विहारराज्यस्य च राज्यपालनिदेशमेतस्य कृतावत्राप्य,
साहाय्यमुच्चैस्तु विधातुमैच्छन्, तस्यानुभावैः शिथिला इवैते ॥७६

एवं विश्वमहोऽभिभाविमहिमप्रद्योतसञ्चारतः,
श्रीमद्गान्धिविवस्वतो हृततमोव्यूहे जगन्मण्डले ।
संजाताः प्रतिपक्षिणः सपदि ते सर्वेऽपि निस्तेजसो
घूत्कारैकधना भृशं हतनिजोत्साहा उलूका इव ॥७७

इति श्रीगान्धिचरिते महाकाव्ये श्रीसाधुशरणमिश्र-
विरचिते नवम सर्गः समाप्तः ।

---

१—जोषं = तूष्णीम् ।

# श्रीगान्धिचरितम्

## [ दशमः सर्गः ]

इत्थं विजित्य निखिलानपि शास्त्रवर्गान्,
धीराग्रणीर्भुवनविश्रुतदिव्यकीर्त्तिः ।
सर्वातिगेन तपसा महसा च गान्धि-
र्दृष्टावशिष्टमथ वीक्षितुमग्रतोऽगात् ॥१

चन्द्राननो घनरुचिः पृथुपीनवक्षा आजानुवाहुसुभगः सरसीरुहाक्षः ।
गाम्भीर्यवारिधिरजातरिपुर्महात्मा तांवेतियामगमदेष पुरीं प्रशस्ताम्॥२

यत्रासीन्नृपतिः पुराथ परमोदारः सतां पूजको,
वात्सल्यान् निजसंततीरिव सदा सम्यक् प्रजाः पोषयन् ।
स्तैन्यादिप्रभृतेर्विपत्तिनिवहाद् रक्षन् स सर्वात्मना,
सद्धर्मेष्वनुशिक्षयन्ननु तया स्नेहानुवृत्त्यानिशम् ॥३

तत्रोद्धतानां निरवग्रहाणामेतर्हि गोरण्डकुशासकानाम् ।
उत्पातसंघातविमर्द्यमानाः क्लिश्यन्ति सर्वा जनताः प्रकामम् ॥४

तत्रागतं तमवलोक्य समस्तलोको दग्धावशिष्टममृतैरिव सिच्यमानम् ।
सस्यं विकासमभजत् परमप्रमोदपीयूषपूरनवसीकरपूरितात्मा ॥५

दीनानाममरद्रुमोऽत्र जनतादुःखौघविध्वंसकः,
श्रीमान् साम्प्रतमागतो नयनिधिर्गान्धिर्महात्मा सुधीः ।

इत्यौत्सुक्यरथेन तूर्णमगमन् दिग्भ्यः समेता जनाः ।
स्त्रीभिर्वृद्धगणैः समश्च शिशुभिः सर्वे दिदृक्षान्विताः ॥६

स्थाने स्थाने वर्तते लोकसंघः संघे संघे गीयते तद्गुणौघः ।
गाने गाने व्यज्यते प्रेमभावो, भावे भावे श्रद्धया भक्तिराशिः ॥७

परामस्मिन् दृष्ट्वा निखिलजनतानामनुपलं,
सुभक्तिं ते सर्वेऽप्यतिशयवतीं शासकगणाः ।
तदीयं माहात्म्यं ज्वलितमिव दिव्येन तपसा,
तदाभूवन् भीताश्चकितचकिताश्चातिशिथिलाः ॥८

केचिद् भीताः शासकेभ्यो नितान्तं ताम्यद्वक्त्रा लोकसंघेषु लीनाः ।
दृष्ट्वा मूर्तिं तस्य दिव्यप्रभावां सद्यो जाता निर्भया भक्तिमन्तः ॥९

जना विश्वबन्धुं महात्मानमेत्य प्रशान्तं सदालोककल्याणमूर्तिम् ।
तपोभिर्विभान्तं यशोभिः परीतं महानन्दपीयूषपूर्णा अभूवन् ॥१०

निखिलजनमनोभिः स्वान्तरावेश्यमानो,
धवलितमिव कुर्वन् तत्प्रतिव्यक्ति तेषाम् ।
सपदि निजमहिम्ना प्रापयन् शान्तिमेतान्,
अवितथमधुराभिर्वाग्भिरूचे महात्मा ॥११

मेघगम्भीरया वाचा प्रीणयन्निव सर्वतः ।
तानाह पुरुषव्याघ्रः सूनृतं तद् हितं वचः ॥१२

पूर्वं नरत्वमिह दुर्लभमेव लोकाः,
वह्वीषु योनिषु सतीषु पुरार्जितेन ।

तत्प्राप्य पुण्यनिवहेन विवेकमूलं,

धर्मेण साधु सफलं सकलं नराणाम् ॥१३

शाखास्वयं बहुविधासु विभिन्नरूपः

संदर्शितो मुनिगणैर्निगमागमज्ञैः ।

सारं तदीयमवगच्छत निर्विरोधं

येनास्तु शान्तिरतुलात्मबलप्रदासौ ॥१४

यस्मादनेकविधमद्भुतमद्वितीयं

ब्रह्माण्डमुद्भवति तिष्ठति यत्र भूयः ।

संलीयतेऽसदिव धाम्नि परे तु यस्मिन्

तन्नाम सत्यमिदमस्ति सुधर्ममूलम् ॥१५

सर्वानन्दसुधानिधिर्निजमनःसन्तोषवारांनिधिः

सर्वप्राण्यभयप्रदा सुकृतिभिः सम्मानिता सादरम् ।

सत्यात्मा श्रुतिघोषितामृतमयी भूतेष्वहिंसा जनाः

धर्मोऽयं परमः सतां प्रियतमः कल्याणपाथोनिधिः ॥१६

अथ सुमङ्गलमात्मविशोधनं दशरथात्मजनामसुचिन्तनम् ।

तनुभृतां जननं सफलं ततः परममोक्षपदं यदधः स्थितम् ॥१७

तपति यद्बलतो रविरम्बरे ग्रहगणैरुडुपैश्च समन्वितः ।

उदधिपूरसरिद्वनभूधरा गणितजीवनिकायधरा मही ॥१८

जगदिदं प्रकृतिः कुरुतेऽनिशं विविधचारुचराचरचित्रितम् ।

विधिहरीशसुरासुरमानवा निजकृतिप्रवणाश्च यदीहया ॥१९

तद्रामनाम सततं स्मरतां जनाना—
माध्यात्मिकं बलमुदेति तपः पवित्रम्।
येनाशु शान्तिरतुला विषयाद् विरक्ति-
र्ज्ञानोदयः सुबलबान् परमात्मदर्शी ॥२०

सृष्टेरयं क्रम इहास्ति विना न यस्मात्
किञ्चित् कदापि न हि चेष्टत एव लोके।
तत् कल्पितं निखिललोकसमानरूपं
प्रेक्षा न यत्र हि समीरवदस्ति पुंसाम् ॥२१

तद्वद् विभोरतुलभव्यफलानि सन्ति
नामानि यद्यपि बहूनि भिदा न तत्र।
रामेति तेषु महनीययशोऽभिपूर्णं
ज्योतिर्मयं परमदिव्यगुणावभासम् ॥२२

प्राप्तुं पदं भगवतो ननु नामरूपे
मार्गौ नृणामभिमतावपरन्न किञ्चित्।
ते द्वे विहाय भुवि नान्यगतिस्तु काचित्
ज्ञातुं कमप्यथ निजाभिमुखञ्च कर्तुम् ॥२३

श्रीमद्रामेतिवर्णद्वयमिदमनिशं देहिनामात्मरूप
पापौघानां कृशानुः सुकृतिजनमनोह्लादकं धाम शान्तेः।
सर्वेच्छाकामधेनुर्भवसलिलनिधेस्तारकं मोक्षभूतं
सीतापूर्वं तदेतद् भवति च भजतां कामिता कामधेनुः ॥२४

यानन्तब्रह्माण्डमचिन्त्यरूपं स्वभ्रूविलासेन सृजत्यजस्रम् ।
पुनश्च तत् संहरति क्षणेन सैवास्ति सीतेति परा हि शक्तिः ॥२५

प्रभेव भास्वच्छशिनावनारतं पवित्रतेवामरनिम्नगामृतम् ।
जहाति छायेव न या तमीश्वरं जयत्युदारा जनकात्मजा ह्यसौ ॥२६

सीतारामेति भगवन्नामसंस्मरणं नृणाम् ।
महापातकसङ्घातान् भस्मसात् कुरुतेऽञ्जसा ॥२७

सीतया सहितं रामनाम दिव्यं तपः स्मृतम् ।
कलौ पापात्मनां पुंसां पावनो धर्म उत्तमः ॥२८

जिह्वैकसाधनं सीतारामनाम मनोहरम् ।
स्वर्गापवर्गयोर्द्वारं भवाब्धितरणे तरिम् ॥२९

न लोके विद्यते तावत् पातकं तत् क्षणान्न यत् ।
सीतारामस्मृतेर्नश्येत् सौरैरिव करैस्तमः ॥३०

अतो हि नित्यं रघुवंशकेतोः सीतान्वितं नाम परं पवित्रम् ।
तत्प्रीतिपूर्वं भजतां जनानां स्यादिष्टसिद्धिर्मनसोऽनुकूला ॥३१

श्रीरामनामामृतसाधुतत्त्वं जानाति शम्भुर्भगवानशेषम् ।
द्वयोर्हि विश्वात्मतया प्रतीतौ भेदो न सन्देहकला च काचित् ॥३२

सद्रूपमेतद् द्वयमेव भद्राश्चिदात्मकं तद् द्वयमद्वितीयम् ।
नित्यं महानन्दरसोर्मिमालाविभासमानं जगदेकबीजम् ॥३३

माहेश्वराच्छतममानसराजहंसो-
रामेत्यचिन्त्यमहिमाद्भुतशक्ति नाम ।

यत्रानिशं विभुरसौ रममाण एत-
दात्मत्वमाप सलिले सलिलं यथास्ते ॥३४

रामेति चैतन्यमयः प्रदीपो ज्योतिर्मयोऽसौ भगवान् पुरारिः।
द्वयोरपि द्वौ महितात्मभावं प्राप्तौ सुभक्तावुभयोरथोभौ ॥३५

काश्यामसौ निजतनुं त्यजते जनाय
मोक्षं ददाति भगवान् शशिशेखरो यत्।
रामेति तारकमहामनुरेव तत्र
ज्ञानात्मको भवति हेतुरचिन्त्यशक्तिः ॥३६

यन्नामिनाम्नोः पृथगस्ति सत्ता सा केवलं लौकिककल्पनायाम्।
परात्परे ब्रह्मणि सर्वगेऽस्मिन् न भेदलेशश्च तयोः कदाचित् ॥३७

सर्वात्मकत्वादिह तस्य संज्ञा न संज्ञिनोऽस्माद् व्यतिरिक्तरूपा।
यस्यास्ति व्यक्तिर्ननु तत्र भेदो व्यक्तित्वहीने कथमस्तु सोऽयम् ॥३८

सर्वेषु नित्यं रमणाच्च तस्य तस्मिंश्च तेषामिति हेतुदृष्ट्या।
रामेति नामिन्यपि नाम्नि साम्यमस्तीति भेदोदय एव नात्र ॥३९

तस्मात् दिव्यमिदं सीतारामनाम सनातनम्।
संकीर्तितव्यं स्मर्तव्यं ध्यातव्यञ्च जनैः सदा ॥४०

श्रद्धास्ति यत्राङ्ग परा च भक्तिः सत्यञ्च विश्वासमयं हृदि स्यात्।
तत्राशु भव्यं समुदेति विद्युत्प्रभामयं ज्योतिरुदाररूपम् ॥४१

समादिशद् जनानेवं महात्मा प्रियसत्यवाक्।
नामसंकीर्तनं पुण्यं मोक्षदं सर्वदेहिनाम् ॥४२

महाज्ञाननिधिर्गान्धिर्ज्ञात्वा भक्तिमतो नरान् ।
समावेशयदात्मीयप्रार्थनायां शुचिव्रतान् ॥४३

पङ्क्तिस्थिताः साञ्जलयः शान्तेन मनसा जनाः ।
प्रत्यह सन्ध्ययोः प्रेम्णा प्रार्थयन्त तमीश्वरम् ॥४४

रघुपतिराघव राजाराम ।
पतितपावन सीताराम ॥४५

इत्याद्युपनिषद्भिस्ते राघवेन्द्रयशोऽङ्कितैः ।
नामभिः पावनैर्भक्त्या सह तेनास्तुवन् प्रभुम् ॥४६

एकमेव परं ब्रह्म सच्चिदानन्दमद्वयम् ।
सर्वव्यापि जगन्मूलं भक्तिग्राह्यं सनातनम् ॥४७

भाषासु विविधास्वेतद् विभिन्नेषु मतेषु च ।
तदेव सेव्यते भक्तैर्नामान्तरकृताह्वयम् ॥४८

तथाप्योंकारतुल्य तद् रामनाम चिदात्मकम् ।
पश्यन्ति योगिनो योगदृशा तत्त्वविवेकिनः ॥४९

यदि कोऽपि भवेन्नाम धर्मः कमपि वाश्रितः ।
अकुर्वन् प्रार्थनामेतामसौ तत्र न गृह्यते ॥५०

इत्थं महाकारुणिको महात्मा विश्वमङ्गलम् ।
सर्वभूतसुहृन् मार्गं सर्वेषां समुपादिशत् ॥५१

साहाय्यं वा विरोधं वा यद्यसौ कुरुते क्वचित् ।
रागादिद्वेषजस्तत्र पक्षपातो न कारणम् ॥५२

नयेऽनुगामिता तस्य वैपरीत्ये विरोधिता ।
ताभ्यां शत्रुत्वमित्रत्वे तदीये सुव्यवस्थिते ॥५३

तपोनिधिर्दयासिन्धुर्विश्वबन्धुः शुचिव्रतः ।
सत्यव्रतश्चिदानन्दपरिपूर्णसुमानसः ॥५४

वसुधेव क्षमाशीलो दुर्लङ्घ्यो हिमवानिव ।
समुद्र इव दुर्द्धर्षः प्रकृत्या शीतलोऽम्बुवत् ॥५५

समो रिपौ च मित्रे च नेर्ष्याछायां गतः क्वचित् ।
शरण्यः सर्वभूतानामवमन्ता न कस्यचित् ॥५६

दयालोर्हृदयं तस्य कोमलं कुसुमादपि ।
वज्रादपि कठोरं तन् न्याय्यान्याय्यविवेचने ॥५७

एवं दिव्यगुणोपेतो मोहनो विश्वमोहनः ।
उपकाननवास्तव्यजनानां दीनचेतसाम् ॥५८

दुःखाम्बुधौ निमग्नानां स्वमुद्धारमपश्यताम् ।
निर्दयैर्नैलिकैरेतैर्गोरण्डैर्दलितात्मनाम् ॥५९

दशामुदश्वत्कल्णो द्रष्टुं प्रस्थितवानसौ ।
जाड्यं हर्तुमथोदीचीमंशुमानिव सानुगः ॥६०

गतस्तत्र विलोक्यासौ दशां दीनां तपो निधिः ।
तेषां प्रकम्पिताङ्गोऽभूद् रम्भातरुरिव स्वयम् ॥६१

ग्रीष्मेष्वातपविप्लुष्टैर्वर्षास्वासारपीडितैः ।
कर्षकैरर्जितानेषामाहारान् जीविताश्रितान् ॥६२

प्रसह्य हरतां तत्र गोरण्डानां सुदारुणैः ।
अत्याचारमहापीडापीडितान् रुदतो ऽ निशम् ॥६३

प्रक्षीणवपुषः क्षुद्भिर्नित्यं शुष्कमुखद्युतीन् ।
निरागसोऽपि सततं कशाघातैर्विलुण्ठितान् ॥६४

विशीर्णमथ कौपीनं वासस्तदपि चाल्पकम् ।
वसानान् हिमकालेऽपि घर्म्मानलसुसेविनः ॥६५

स्त्रियोऽपि विकृताकाराः क्षुत्क्षामा मुक्तमूर्धजाः ।
गलितैकाम्बरास्तार्णगृहा मृण्मयभाजनाः ॥६६

इत्थं विलोक्य दयनीयदशां दयालु-
र्वन्यैर्नृणां पशुगणैः समवृत्तिभाजाम् ।
मर्माहतः सपदि सर्वसुहृन्महात्मा-
तानुद्दिधीर्षुरवदद्विपदम्बुराशेः ॥६७

स्वार्थात्मनामपि यतो भुवि सिध्यतीष्टं
प्राणाधिकं तदिह साधनमङ्ग तेषाम् ।
किन्त्वत्र येन सततं निज वाञ्छितार्थ-
सिद्धिर्भवेद्करुणः कथमर्द्यतेऽसौ ॥६८

न भोक्तुमन्नानि धनानि नैषां
न वा गृहं तार्णमयादृतेऽन्यत् ।
क्षेत्रन्न किञ्चित्परिधातुमर्हं
वस्त्रन्न चेत्थं पशुतास्त्यमीषाम् ॥६९

स्वार्थस्य हेतोः परकीयमर्थं निघ्नन्ति ये सन्ति नराधमास्ते ।
रक्षन्परार्थं नु ततस्स्वमर्थं संसाधयेत् यः पुरुषोत्तमोऽसौ ॥७०

वनाद्रिजन्त्वोघसरित्समुद्रभरो न दुःखाय कदापि तस्याः ।
सर्वंसहाया अपि धर्मलोपो यथा भवेद्दुष्प्रसहो नितान्तम् ॥७१

सृष्टेर्विधाता परमेश्वरोऽपि धर्मोपरोधं समवेक्ष्य सद्यः ।
धत्तेऽवतारं विविधं विहन्तुं तद्द्रोहिणश्चासुरभावदुष्टान् ॥७२

विश्वात्मनो विश्वमिदं नु तस्य परम्प्रियं स्नेहसुधाभिसिक्तम् ।
क्रीडार्थमुद्यानमनन्तजीवनिकायपुष्पोल्लसितं सदैव ॥७३

जले स्थले भूगिरिकन्दरायां खे वा स्थितैः प्राणिगणैरुपेतम् ।
अचिन्त्यनानारचनानिधानं दिवानिशं तेन सुरक्ष्यतेऽदः ॥७४

तदीयसृष्टौ तृणमप्यनीश विपाट्य सन्धातुमलं न कश्चित् ।
न तादृशी शिल्पकला न दृष्टा न वास्ति विज्ञानमथापि तादृक् ॥७५

इति मधुरवचोभिः सूनृतैस्स्नेहपूर्णैः
विपदुदधिनिमग्नान् मानवानुद्दिधीर्षुः ।
सुहृदरिषु समानो दीनबन्धुर्महात्मा
परिधृतनयमार्गैस्तोषयामास सर्वान् ॥७६

ततः प्रभोर्दिव्यगुणाकरस्य यशोनिधेर्दक्षिणबाहुभूतः ।
राजेन्द्रनामोत्तरगप्रसादः सुधीश्वरः प्राह वचो महार्थम् ॥७७

विभो महाभीतितमो विनश्येद् विद्यासु शिक्षार्ककरैर्यदैषाम् ।
अमी तदा स्युर्निजगौरवज्ञाः धृत्यात्मसत्त्वोल्लसिता नितान्तम् ॥७८

संस्थापनीयं विविधैर्विधिज्ञैराचार्य्यवर्य्यैरधुनेह विज्ञैः ।
सनाथितं शिष्यहिताय विद्यापीठं हि लोकाभ्युदयार्थमद्धा ॥७९

एवं तदीयाभिहितं यथार्थमाकर्ण्य गान्धिर्जनतैकबन्धुः ।
प्रीतिं परामाशु गतो महात्मा प्राचीकशत् स्वाभिमतं तथासौ ॥८०

इत्थं लोकगुरोर्निशम्य भणितिं सद्यः सुधावर्षिणी-
मानन्दाम्बुधिमग्नमानसतया प्रीतिं निपीताः पराम् ।
सर्वास्ता जनताः प्रसन्नरुचयः स्त्रीबालवृद्धात्मिकाः
स्वापद्राशिनिशाप्रभातमचिरादशासिषुः शोभनम् ॥८१

इति श्रीगान्धिचरिते महाकाव्ये श्रीसाधुशरणमिश्रविरचिते
दशमः सर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## [ एकादशः सर्गः ]

ततः सत्यव्रतो धीमान् महात्मा पुरुषर्षभः ।
जनानां श्रेयसे तत्र* विद्यापीठमकल्पयत् ॥१

यत्प्रतिष्ठानतो लोका वभूवुर्हृतभीतयः ।
ततोऽन्वर्थं तु तत्पल्या नाम भीतिहरेत्यभूत् ॥२

सत्यैकनिष्ठैराचार्य्यैर्निर्भयैः शान्तिमूर्तिभिः ।
विद्याविनयसम्पन्नैरध्यापनविचक्षणैः ॥३

निर्लोभैः शिष्यकल्याणबुद्धिभिः समदर्शिभिः ।
त्यागिभिः कर्मणा नित्यं मोहनस्यानुयायिभिः ॥४

आचार्याभिश्च नारीणां मूर्ताभिरिव शक्तिभिः ।
पूजितं शिष्यरोलम्बकदम्बैरभितोऽन्वितम् ॥६

अहिंसां सत्यसौहार्दनिर्भयत्वोपकारिताः ।
क्षमाशान्तीश्वरप्रेमनामसंस्मरणन्तथा ॥७

स्वात्मनिर्भरतां देशसेवां शुद्धव्रतानि च ।
पाठ्यमानाः स्त्रियो वृद्धाः शिशवोऽपि निरन्तरम् ॥८

---

* तत्र = उपकाननभूमौ

स्फुलिङ्गा इव ते वह्नेर्भासमानाः समन्ततः ।
जयशब्दैर्महाघोषैर्महात्मानंसमर्चयन् ॥९

इत्थं तत्र दशां दीनां जनानां वीक्ष्य मोहनः ।
पुनर्वेत्रवतीमागात् लोकैरध्वनि पूजितः ॥१०

द्रष्टुकामा जनास्तत्र मोहन तु शुचिव्रतम् ।
दूराद्भ्यागमन् भक्त्या बालस्त्रीवृद्धसंगताः ॥११

विशालभालं सुश्यामं नलिनायतलोचनम् ।
आजानुबाहुं सुनसं कम्बुग्रीवं मनोहरम् ॥१२

महाज्ञाननिधिं शान्तं निर्वैरं ज्योतिरान्तरम् ।
ध्यायन्तमन्तर्दिव्येन चक्षुषा विजितेन्द्रियम् ॥१३

समुद्रमिव दुर्धर्षं विश्वमङ्गलभावनम् ।
ज्वलितं तपसा दिव्यमहसा च समन्वितम् ॥१४

आकर्षति यथा लौहमयस्कान्तं निजात्मनि ।
तथाकृषत् नृणां स्वान्तश्चेतांसि मनुजर्षभः ॥१५

तिल कुसुमसम्पर्कात् यथा सुरभि जायते ।
तथा तदीयशुद्धान्तर्गुणैः सह समागमन् ॥१६

पूर्वं महात्मना तेन गम्भीराकारसम्पदा ।
पश्चात् मधुरया वाचा मानिता मुदमावहन् ॥१७

येनात्मा स्ववपुर्ज्ञानं दारापत्यधनादिकम् ।
लोकसेवार्थमुत्सृष्टं यावज्जीवं तपस्विना ॥१८

नान्यत् ततः प्रियं तस्य सृष्टिं स्वामिव पश्यतः ।
मनागपि कृते तत्र वैषम्ये हृदि वेदना ॥१९

स समाश्वास्य ताः सर्वा जनता प्रियसत्यवाक् ।
दर्शयन् श्रेयसां मार्गमिदमाह तपोधनः ॥२०

सर्वापद्भ्यो हि यो रक्षन् प्रजाः स्वा इव सन्ततीः ।
पोषयेद् दानमानाभ्यां स राजा पूज्यते जनैः ॥२१

प्रजाभिरक्षणाद् राज्ञो राजत्वं लोकपूजितम् ।
अन्यथा वर्तमानस्य वेनस्येव दशोदयः ॥२२

धर्मपाशविमुक्तस्य स्वच्छन्दस्य महीपतेः ।
प्रकृत्यादीनि दुष्यन्ति करणानीव देहिनः ॥२३

ततः स्वार्थपरैर्नित्यं प्रकृत्यादिगणैर्भृशम् ।
पीड्यन्ते हि प्रजाः सर्वा निर्दयैरजितात्मभिः ॥२४

सैवेयमधुनावस्था भवतां प्रतिभाति मे ।
सर्वस्वहरणं यत्र कारावासोऽपि सर्वदा ॥२५

अहिंसाव्रतमाश्रित्य सत्यधैर्यपुरस्कृतम् ।
तैः सहासहयोगोऽसौ भवद्भिः प्रविधीयताम् ॥२६

महास्त्रमेतदव्यर्थं शत्रुनिग्रहकारकम् ।
इदमाश्रयतां पुंसां त्रिलोक्या विजयः करे ॥२७

इदं विदधतां भद्राः सर्वे स्युः प्रतिपक्षिणः ।
तमांसीवोद्गते भानौ पुरः स्थातुमनीश्वराः ॥२८

इत्थं महामतिर्लोकानुपदिश्य स मङ्गलम् ।
सद्भिराचरितं मार्गं पूर्वैश्चापि महात्मभिः ॥२९

दंदह्यमानान् दुःखाग्नेर्ज्वालाभिः परिशोचतः ।
व्यसर्जयदमून् सर्वान् दयालुर्दीनवत्सलः ॥३०

इत्थ लोकान् समाश्वास्य महात्मा पुरतः स्थितान् ।
पुनर्वेत्रवती गन्तुं प्रतस्थे सानुगो भ्रमन् ॥३१

गान्धि विपिनविहारी वर्मा यान्तं तु वेत्रवत्यां तम् ।
नक्तं स्वकीयगेहे पाद्यार्घैः पूजयामास ॥३२

दृष्ट्वा विशुद्धभाव देशप्रेमाणमुत्तमं चास्य ।
गान्धिस्तमाशु हृष्यन्नादिक्षद् देशसेवायै ॥३३

ततो महात्मना तेन भ्रमतादर्शि सा नदी ।
चन्द्रावती पुण्यजला वीचिमालाभिरञ्चिता ॥३४

नलिनीदलशैवालैः शुकपक्षच्छविः क्वचित् ।
क्वापि दुग्धाम्बुराभाति पुण्डरीकचयार्चिता ॥३५

क्वचिद् राजीवकिञ्जल्कैः पीताम्बुरिव सा नदी ।
क्वापि नीलेव नीलाब्जैः सैकतेन विराजिता ॥३६

कोकसारसकादम्बकाञ्चीमधुरनिस्वना ।
सैकताम्बर संवीता रमणीव मनोहरा ॥३७

तटद्रुमैः कुसुमितैरलिहुंकारनादितैः ।
कूजत्पक्षिगणाकीर्णैरावर्तशतशोभिता ॥३८

विलोक्य पुण्यसलिलामापगान्तां नरोत्तमः ।
पुरीविभूषणं सद्यो महात्मा प्रीतिमानभूत् ॥३९

अथायासीदुपवनं पुष्पितैर्नवपल्लवैः ।
नानाशकुन्तनिनदैर्गुञ्जद्भ्रमरसंकुलैः ॥४०

रसालशालपुन्नागमधूकोदुम्बरार्जुनैः ।
कपित्थाश्वत्थवहुपाज्जम्बूप्लक्षादिभिद्रुमैः ॥४१

सरोभिः पुण्यसलिलैः स्मेरेन्दीवरराजिभिः ।
मत्तद्विरेफसंगीतैरुपासितमनुक्षणम् ॥४२

कूजत्पतत्रिमधुरध्वनिभिः साधु पूजितम् ।
क्वचिन्नृत्यन्मयूराणां केकाभिः समलंकृतम् ॥४३

कर्मणा मनसा वाचा वपुषापि यथायथम् ।
लोकसेवार्थमात्मीयं जन्म यो मनुतेऽनिशम् ॥४४

तमागतं समालोक्य विश्वमङ्गलभावनम् ।
सुहृच्छत्रुसमम्पुंसां बन्धुभावपुरस्कृतम् ॥४५

तदानीं तरवो वृद्धा उत्थिता इव सादरम् ।
गृहीत्वा पाणिभिः सर्वे पल्लवैरिव सोत्सुकम् ॥४६

सुरभीणि सुपुष्पाणि स्वादून्युरुफलानि च ।
पक्षिणाम्मधुरालापैर्जयशब्दैश्तमार्चयन् ॥४७

मन्दमारुतसोत्कम्पा मुदा पुष्पैरमानयन् ।
पुरकन्या इवाचारलाजैर्वाललतास्तु तम् ॥४८

कोकिलानां कलालापमलीनां मधु गुञ्जितम् ।
कूजितं सारसानां च शृण्वन् स प्रीतिमाप्तवान् ॥४९

सच्छायान् नवपुष्पाढ्यान् फलिनो वीक्ष्य पादपान् ।
वर्षातपसहानाह महात्मा स्वानुगान् जनान् ॥५०

पश्यतेमान्द्रुमान् भद्राः स्वयं मूर्ध्ना समागतान् ।
शीतवर्षातपानेते सुखार्थं दधते ऽनिशम् ॥५१

छायापुष्पफलैर्लोकानित्थमेवोपकुर्वतः ।
निर्द्वन्द्वान् शाखिनो वीक्ष्य शिक्षितव्यं ततो नरैः ॥५२

सर्वैरवयवैः स्वीयैरुपकारपरायणान् ।
सफलं कुर्वतो मन्ये जनुः स्वं निखिलान् द्रुमान् ॥५३

परोपकरणाद् प्रीतैः सेव्यन्ते वयसां गणैः ।
नृत्योपगीतिभिर्मन्दमारुतैस्तरवो मुदा ॥५४

निर्गमादिव तोयानां सम्पदामुपयोगिता ।
वैपरीत्ये महामोहो विपत्ताविव देहिनाम् ॥५५

इत्थं साधूनिवालोक्य परार्थैकान्तजीविनः ।
पादपान् मोहनोऽमंस्त सेवया जन्म सार्थकम् ॥५६

वनप्रियाणां मधुरैरालापैः परिनादितम् ।
गुञ्जतां षट्पदौघानां निनादैरुपशोभितम् ॥५७

सारिकाणां शुकानाञ्च पञ्जरस्थापियनामिव ।
पालितानां कलालापैः सर्वतो मुखरीकृतम् ॥५८

राजितं कुड्मलै रम्यैः कुसुमैर्नवपल्लवैः ।
लतामण्डपमासाद्य तुतोष मनुजर्षभः ॥५९

जनतासु गुरुण्डानां दुर्वृत्तं कुत्र कीदृशम् ।
इति साक्षादसौ ज्ञातुं प्रस्थितः पुरुषोत्तमः ॥६०

इष्टिकोद्वहने लोकान् पथि यातोऽन्यतः क्वचित् ।
वलान्न्ययोजयन् बालस्त्रीवृद्धान् मनुजाधमाः ॥६१

अथामुनाध्वना यान्तं महात्मानं प्रसह्य ते ।
तदेव कारयामासुः कर्मानर्हमतद्विदः ॥६२

श्लाघनीयतमं तस्य कर्म दृष्ट्वाति विस्मिताः ।
निर्वेशं दित्सवोऽपृच्छन् नामगोत्रं तदाश्रयम् ॥६३

श्रुत्वा गांधीति तन्नाम त्रपाभीतिविवर्णताः ।
भजन्तो व्याकुलीभूताः स्वापराधमचिक्षमपन् ॥६४

क्षमावारांनिधिर्गान्धिर्महात्मा साधुसत्तमः ।
तत्कृतागश्चयं प्रीत्या मर्षयन्नाह सुव्रतः ॥६५

वन्धुभावं पुरस्कृत्य मया सर्वमुपेक्षितम् ।
नैवं पुनर्भवद्भिस्तद् विधेयं केष्वपि क्वचित् ॥६६

नास्माद् गुरुतरं किञ्चित् पातकं भुवि दृश्यते ।
यथा निरागसां पुंसां यातनोत्पादिता भवेत् ॥६७

अपकुर्वन् जनान् कश्चित् सावज्ञं जगतीतले ।
न स्थितिं लभते वार्धौ स्फुटिता नौरिव क्वचित् ॥६८

एवं महात्मा तान् सर्वान् मर्पयित्वोपदिश्य च ।
यावदाश्रममायाति निःस्वानेकजनाकुलम् ॥६९

तावद् गुर्जरदेशीयखेडामण्डलवासिनाम् ।
दुर्भिक्षानलदग्धानां बलिजोऽभून्महान् कलिः ॥७०

तत्र पुंसां समुत्पन्ने विवादे विपुले नवे ।
तत्रत्यैर्विधुता वृत्तं प्रेपितं सहसागमत् ॥७१

एवं द्वयोरप्यनयोः कर्तव्यत्वेन कार्य्ययोः ।
व्याकुलीक्रियमाणो ऽसौ तदुपायं व्यलोकयत् ॥७२

ततो दृग्गोचरीभूतं द्वन्द्वं तस्य यशोनिधेः ।
सुरेन्द्रोरिव सुश्लाध्यं राजेन्द्रव्रजयोस्तदा ॥७३

सर्वविद्यानिधी कार्य्यविधिज्ञौ प्रसमीक्ष्य तौ ।
महात्मा स तयोर्हस्ते जनताकार्य्यमार्पयत् ॥७४

उपास्यमाना वागदेवी गोकुलश्चाप्युभे नृणाम् ।
कामान् वारीव पर्जन्यः समन्तादभि वर्षतः ॥७५

गोसेवा परमो धर्मः सर्वेषां सर्वदा मतः ।
कृषिप्रधानदेशस्य साधनं त्वैहिक परम् ॥७६

विद्यया निर्भयत्वं स्यात् कार्य्यानुष्ठानदक्षता ।
यतश्च देहिनां सर्वकल्याणाधिगमोऽचिरात् ॥७७

अतो भवद्भिर्गोशाला पाठशाला च यत्नतः ।
संस्थापनीये लोकानां मङ्गलाय हितैपिभिः ॥७८

यत्र गावश्च वेदाश्च सेव्यन्ते श्रद्धया जनैः ।
तत्र श्रीरायुरारोग्यज्ञानविज्ञानसम्पदः ॥७९

अथावश्यकता मे स्यादिहागन्तुं पुनर्यदि ।
शीघ्रं समागमिष्यामि कार्य्यगौरवभागपि ॥८०

एवं प्रदर्श्य कर्तव्यमार्गं पुंसां महामतिः ।
महात्मा प्रस्थितस्तूर्णं गुर्जराय दृढव्रतः ॥८१

अथ वृत्तमिदं सद्यो विद्युतेव समन्ततः ।
जनतासु प्रतिव्यक्तिकर्णं प्रतिगृहं गतम् ॥८२

समाकर्ण्य जनाः सर्वे महात्मानं दयार्णवम् ।
गुर्जरं प्रतितिष्ठासुं विषयं सहसाव्रजन् ॥८३

सबालवृद्धैः सस्त्रीकैः सोत्कण्ठाश्रुविलोचनैः ।
प्रेम्णा पिपासुभिर्दृग्भिर्मोहनं तपसां निधिम् ॥८४

पीयूषवर्षिणीं तस्य वाचं सूनृतवादिनः ।
शुश्रूषुभिर्महोत्साहैः सर्वलोकहितैषिणीम् ॥८५

जयशब्दैर्नमःशब्दैश्चाप्नुवद्भिर्नभोऽङ्गणम् ।
जनौघैर्नगरी सर्वा नीरन्ध्रा समजायत ॥८६

ततो वाष्परथं सर्वा जनता पर्य्यवेष्टयत् ।
यत्रारूढो महात्मासौ स्वबन्धुजन्मिनां प्रियः ॥८७

केचित् विरचिता माला नवपुष्पैः सुगन्धिभिः ।
प्रेम्णात्मचन्द्रं तं देवमात्मना पर्यधापयन् ॥८८

अभ्यवर्षन्नमुं केचित् लाजैरिव समुज्ज्वलैः ।
लोकाः सुगन्धिभिः पुष्पैरन्तरिक्षादिवागतैः ॥८९

इत्थमुद्वेलतां प्राप्तः प्लावयन्निव मेदिनीम् ।
समुद्र इव लोकौघो वर्द्धतेस्म महारवः ॥९०

तदा महात्मनस्तस्य जयशब्दो महारवः ।
यशःपट इवास्तारीत् रोदसी व्याप्नुवन् दिशः ॥९१

स्वदेशविजयस्तम्भवैजयन्तीविभूषितैः ।
स्वयसेवकसंघातैः सैनिकैरिव सज्जितैः ॥९२

जयत्वविरतं गांधिर्महात्मा दीनवत्सलः ।
विश्वबन्धुर्महाबाहुः सत्याहिंसादृढव्रतः ॥९३

साधुर्ज्ञानवतां श्रेष्ठः सर्वेषामभयप्रदः ।
महाकारुणिकः शत्रौ मित्रे चापि समादरः ॥९४

इत्येवं सर्वतो लोकैरालपद्भिर्निरन्तरम् ।
सस्तूयमानमाहात्म्यो महात्मा प्राह तानिदम् ॥९५

भो भोः शृणुत मित्राणि भद्र भवतु वो ऽनिशम् ।
कल्याणी मामिकां वाचमिमां लोकाघमर्दिनीम् ॥९६

सम्यगाकर्णितैषा वो मनसा चावधारिता ।
महास्त्रं विपदोघानां सद्यः संहारकारकम् ॥९७

अहिंसा सत्यमस्तेयं त्यागो निर्लोभतार्जवम् ।
क्षमोपकारितोत्साहो धृतिः क्रोधविनिर्जयः ॥९८

मनुप्रणीतो धर्म्मोऽयं सर्वलोकसुखावहः ।
मनुष्यजन्मसाफल्यमस्मादेवाभिजायते ॥९९

मूर्धन्यःसर्वधर्म्माणां कल्याणविबुधद्रुमः ।
सर्वाभीष्टसुधासिन्धुः विपदभ्रप्रभञ्जनः ॥१००

एनं स्वीकुर्वताम्पुसां न भीतिश्चापि चिन्तना ।
शत्रवोऽपि पराभूता जायन्ते सुहृदो ऽचिरात् ॥१०१

सर्वत्र विजयस्तेषां प्रेमसद्भावनात्मकः ।
भवेदभ्युदयो भूयान् सर्वसौख्यविवर्द्धनः ॥१०२

एवं ज्ञाननिधिः सर्वानुपदिश्य महामतिः ।
प्रतस्थे गुर्जरं धीमान् विषयं स्वगणैर्वृतः ॥१०३

प्रतिवाष्परथारोहस्थानं कुसुमवृष्टिभिः ।
जयशब्दैर्नमःशब्दैश्चार्च्यमानो मुदा ययौ ॥१०४

प्रागेव विद्युत्सम्वादात् तदागमनसूचिताः ।
जनौघास्तं महात्मानं प्रथमेन्दुमिवार्चयन् ॥१०५

सर्वातिशायिना दिव्यतेजसां राशिना विभुम् ।
विभ्राजमानं तं लोकाः पपुः सस्नेहमादृताः ॥१०६

तत्र मोहनलालेन शङ्करेण च धीमता ।
मित्रत्वमासीदेतस्य सदुत्साहविवर्द्धनम् ॥१०७

तत्रानसूयां सम्प्राप्तामनसूयामिवानघाम् ।
सत्त्वोत्साहवतीं वीरां देशसेवाधृतव्रताम् ॥१०८

पुनर्म्लेच्छगणैर्दृप्तैर्बाध्यमानं समन्ततः ।
रक्षितुं भारतं दुर्गामिवामुं सोऽन्वमन्यत ॥१०९

अथासादितवान् लौहपुरुषो धीमताम्वरः ।
वल्लभाख्यः पटेलोऽसौ जनताप्रियवल्लभः ॥११०

स राजनीत्यकूपारपरगामी महामतिः ।
भीतेरपि भयं यस्मान्महापुरुषलक्षणः ॥१११

तत्कृतान्दोलने दत्तहस्तं वल्लभमागतम् ।
शिष्यत्वेनाग्रहीत् स्नेहात् महात्मैन सुनिर्भयम् ॥११२

इत्थं विशुद्धहृदयैर्निजदेशसेवा—
कर्म्मोद्यतैः पुरुषकेसरिभिः समन्तात् ।
राजानुशासनविनम्रविरोधभूत—
मान्दोलनं जनहिताय विधातुमैपीत् ॥११३

वैमत्यं निखिलं विहाय सहसा प्राप्तैकमत्यैर्जनै—
रादेशं परिपालयद्भिरखिलं गान्धेर्महात्यागिनः
सग्रामे प्रतिपक्षिणः सुविजितः सर्वे निलिल्युस्तदा
रेजे भारतवासिनां जयवती सा वैजयन्ती चिरम् ॥११४

इति श्रीगान्धिचरिते महाकाव्ये श्रीसाधुशरणमिश्रविरचिते
एकादशः सर्गः समाप्तः

# श्रीगान्धिचरितम्

## [ द्वादशः सर्गः ]

ततः प्रजानां परमार्तिभाजां पीडां समुत्पादयितुं प्रवृत्ताः ।
समन्त्र्य सर्वे किल शासकास्ते स्वं शासन जालमिव प्रतेनुः ॥१

अथ प्रसंगाद् यदि कोऽपि लोक उच्चारयेन्नाम परस्परोक्तौ ।
स्वतन्त्रतायाः सभवेन् नितान्तं महापराधी गणितोऽभियोगे ॥२

गोष्ठीषु पुंसां वदतो जनस्य स्वदेशसेवेति कुतोऽपि हेतोः ।
मन्तुं महान्तं गणयन्ति सर्वे विद्रोहभूतं किल शासकास्ते ॥३

स्वपूर्वजानामिव नो वलं चेत् देशोन्नतिश्चापि तथेति कश्चित् ।
ब्रूयात् स मर्त्यो महतागसा स्यात् संयोजितः शासनकृद्भिस्तैः ॥४

प्रियः स्वबन्धुर्जगतोऽखिलस्य गान्धिर्महात्मेति वदेज्जनश्चेत् ।
स दण्ड्यतामेत्य चिर महीयो द्रोहाभियोगे न तितिक्ष्यतेऽसौ ॥५

राज्ञः प्रजापालनमेव धर्म्मस्त्यक्त्वा तदर्थं प्रसभं हरद्भिः ।
करैरसंख्यैरधिकारिभिस्ते प्रपीडिताः सन्ति जनाः समन्नात् ॥६

आदाय सर्वाणि वसूनि पुसां प्राणानिवान्नानि वलात् स्वदेशम् ।
निन्युः क्षुधार्ताश्च निरीक्षमाणाः लोकान् गुरुण्डा निरपत्रपास्ते ॥७

यदा च शर्म्मण्यनृपेण सार्द्धं गोरण्डभूपस्य महाहवोऽभूत् ।
तत्रापयानं प्रवलं स्वकीयमालोक्य सम्राड् व्यथितान्तरात्मा ॥८

ततो महात्मानमशेषलोकवन्द्यं सदा न्यायपथप्रवृत्तम् ।
सम्राडयाचिष्ट मृधे पणेन साहाय्यमाप्तुं विजयं परेभ्यः ॥९

यदा हि भीष्मे रणसंकटेऽस्मिन् साहाय्यतः स्यात् भवतां जयो नः ।
विधास्यते नाम मया तदैव पूर्णं स्वतन्त्रं ननु भारतं वः ॥१०

ततोऽर्थिनां कल्पतरुः कृपाब्धिर्गान्धिर्महात्मा नयमार्गनिष्णः ।
साहाय्ययाञ्चां सफलां विधातुमैहिष्ट तस्य ब्रिटिशाधिपस्य ॥११

सर्वान् जनान् भारतवासिनोऽसावाहूय गोष्ठ्यां स्वमतं मनोज्ञम् ।
अशीश्रवच्चावसराभिलापी प्राह प्रियं सत्यहितं मितञ्च ॥१२

साहाय्यदानं परमोऽस्ति धर्मो रक्षात्मकं नाम यदार्तपुंसाम् ।
शक्तोऽथ सम्पन्नतया प्रतीतः कुतोऽपि किञ्चिन्न समीहतेऽसौ ॥१३

तस्यादिदानीं ब्रिटिशाधिपस्य साहाय्यदानं विषमस्थितौ नः ।
कर्तव्यमस्तीति विभावयन्तु सर्वे जना भारतवासिनोऽद्धा ॥१४

यद्यप्यमुष्मिन् विषयेऽस्ति लोकमान्यस्य भिन्ना मतिरप्यनिन्द्या ।
तथापि शत्रोरपि पीडितस्य साहाय्यदानं श्रुतिभिः प्रदिष्टम् ॥१५

प्राज्येन सैन्येन धनेन चास्मै साहाय्यदानं मुदितैर्भवद्भिः ।
विधेयमस्मिन् न पणस्य चर्चा कदापि कार्य्यावसरानु दृष्ट्या ॥१६

यार्तिर्भवेदर्थिजनस्य याच्ञाकाले हिमानीव मनःसरोजम् ।
विग्लापयन्ती हि निषेधभीत्या तदर्थपूर्त्यां समुपैति शान्तिम् ॥१७

स्वमानमुत्सृज्य जनो नु कश्चित् यद् याचते नाम मृतः स पूर्वम् ।
तस्मादपि प्राक् पुरुषो मृतोऽसौ ब्रूते नकारात्मकमुत्तरं यः ॥१८

इत्थं महात्मन्यथ साधुवाचमुक्त्वा तदानीं विरते जनौघः ।
सर्वं तदुक्तं त्वरितं विधातुं प्रावर्ततालखर्वबलप्रकर्षः ॥१९

जलस्थलव्योमभवेऽति भीष्मे विचित्रदिव्यास्त्रनवप्रयोगैः ।
महारणे तत्र जयाङ्कलक्ष्म्या सभाजितोऽसौ वृटिशेश्वरोऽभूत् ॥२०

अथ स्वदेशस्य तपस्विवर्य्यो गान्धिर्महात्मा वृटिशेशदत्तम् ।
स्वाधीनतादेशमसौ जनौघैः प्रतीक्षयामास समं तदानीम् ॥२१

स्वराज्यवार्ता खलु दूरमास्तां नामग्रहस्तस्य महापराधः ।
विधिस्तु रौलेटकृतो नराणां विनिग्रहार्थं सचिवैर्वितेने ॥२२

ततः प्रजज्वाल समस्तदेशलोकप्रकोपानलहेतिरुग्रा ।
याप्युच्छलद्वीचिमगाधसिन्धुं विशोषयेदौर्व इवात्मशक्त्या ॥२३

नयज्ञशान्तिप्रियनेतृवर्य्यैः प्रबोधिता द्राग् जनता तदानीम् ।
विहाय शेषं धृतशान्तिभावा कर्तुं विरोधं निरचेष्ट सास्य ॥२४

साहाय्यदानस्य फलस्वरूपं स्वराज्यमेभ्यस्तु प्रतिश्रुतं यत् ।
तल्लोकदुःखाकरदण्डनीतेर्निर्माणतोऽपूरि नृपेण तेन ॥ २५

तस्माद् विरोधः प्रबलो विधेयः सर्वत्र देशेषु जनैर्हि शान्तैः ।
कृतोपकारेषु कृतघ्नताया विरोध एवास्ति विधिः प्रशस्तः ॥२६

इत्थं समस्तैरथ भारतीयैर्जनैरहिंसाव्रतशुद्धभावैः ।
सर्वत्र देशेष्वनयस्य तस्य गोष्ठी विरोधार्थमकारि शान्तैः ॥२७

पाञ्चालदेशेऽपि सुधासरोऽस्ति तीर्थं प्रसिद्धं गुरुनानकस्य ।
नृणां सभाभून्महती हि तत्र स्थाने क्वचिद् रम्यतमे तदर्थम् ॥२८

ओडायरो नाम महाभिमानः प्रान्तस्य तस्याथ पतिर्मनस्वी ।
प्रकोपनो विश्रुतदुष्प्रदुर्वृत्तिः क्रोधाग्निना प्रज्वलितो बभूव ॥२९

आहूय सेनापतिमुग्रकर्मा समादिशद् दैत्यमिवातिहिंस्रम् ।
शान्तान् निरस्त्रान् त्वरया जनौघान् हन्तु भुशुडीगुलिकाप्रयोगैः ॥३०

तथेति तूर्णं प्रतिगृह्य मूर्ध्ना निदेशमेतस्य ययौ चमूपः ।
तथा विधातुं सहवाहिनीभिः सुसज्जिताभिर्विविधैर्महास्त्रैः ॥३१

निरागसोऽसंख्यजनान् निरस्त्रान् स्त्रीबालवृद्धैः सहितान् सभायाम् ।
प्रभाषमाणानपि शृण्वतश्च देशोन्नतेरौपयिकं विमर्शम् ॥३२

स्वदेशसेवाप्रवणान् विनीतान् विद्यार्थिनः केसरिवद् बलिष्ठान् ।
रामा निजाङ्के परि लालयन्तीश्चन्द्राननान् कामनिभांश्च बालान् ॥३३

सद्यः सभास्थानमुपेत्य सर्वे चमूचराः शस्त्रसुसज्जितास्ते ।
संकेतिताः स्वपृतनेश्वरेण जघ्नुर्नरान् वज्रवदस्त्रजालैः ॥३४

नराधमैस्तैर्युगपद् भुशुण्डीनानास्त्रमुक्तैस्तु पृषत्कसघैः ।
आहन्यमानाः परितो जनौघाः चङ्क्रन्द्यमाना व्यसवो निपेतुः ॥३५

हा तात हा मातरिति प्रकामं लालप्यमानाः करुणं रुदन्तः ।
रक्तोक्षिता भूपतिता लुठन्तो लोकाः क्षताङ्गोपरतास्तदासन् ॥३६

केचित् कराभ्यां परिगृह्य पुत्रान् पुत्रीश्च पत्नीरथ केऽपि बालान् ।
मृतान्निजाङ्के प्रसमीक्षमाणाः प्राणान् जहुः स्वान् रुधिरोक्षिताङ्गाः ॥३७

भ्राष्ट्रेऽतितप्ते परिभर्ज्जितानि वीजानि दग्धानि यथा भवन्ति ।
तथा तदस्त्राग्निशिखाभिसृष्टा विदग्धगात्रा जनता अभूवन् ॥३८

तासां वपुर्भ्यः परितः क्षतेभ्यो विनिःसरद्भी रुधिरप्रवाहैः ।
सर्व्वं तदुद्यानमभूत् क्षणेन रक्तोत्पलाभं करुणार्तनायम् ॥३९

क्वचिद् जनानां जननीश्च तातमुद्दिश्य दीनैरुदितैः कुतश्चित् ।
पुत्रं स्वमित्रञ्च जलं पिपासाकुलात्मनां प्रार्थयतां निनादैः ॥४०

कुत्रापि हाहेति महार्तनादैः क्वचिच्च पुंसां गुरुभिर्व्यथाभिः ।
मर्माहतानां करुणैर्विलापैः रम्यं तदुद्यानमभूत् सुभीमम् ॥४१

सर्वं तदाराममभूत् क्षणेन विनिःसरल्लोहितलोहिताभम् ।
यद् भूमिरासीत्सुचिरंसुरक्तपूरोक्षिता शोणमयी समन्तात् ॥४२

न घातुकानामपि कौणपानां क्रौर्य्यं निरागस्सु कदाचिदेवम् ।
दृष्टं हि केनापि नराधमानां यथानुकम्प्येष्वधुना प्रवृत्तम् ॥४३

परःशतानां रमणीगणानां तदङ्कभाजामनलप्रभाणाम् ।
यदर्भकाणामुपरि प्रजह्रुस्ततो नृशंसा मनुजाधमास्ते ॥४४

कर्म्माति हिंस्रं भुवि दानवीयमेषां विलोक्याथ जनास्तु सर्वे ।
क्षुभ्यन्महाम्भोधिमहोर्मिमालानिभास्तदा ते व्यथिता बभूवुः ॥४५

ततो महात्माखिललोकबन्धुः क्षमार्णवो नीतिविदां वरिष्ठः ।
राज्ञाथ तेनासहयोगमेव सहाभिमेने परमौषधं सः ॥४६

अथ स्वदिव्येन तपोमहिम्ना गान्धिर्महाज्ञाननिधिस्तपस्वी ।
सत्याग्रहं नाम निजं महास्त्रममोघमाविष्कृतवान् प्रशान्तम् ॥४७

न यत्र हिंसा न च युद्धचर्चा न वा प्रकोपानलचेष्टितानि ।
न्याय्यस्य धर्म्यस्य च रक्षणार्थ-माश्रीयते केवलमेव सत्यम् ॥४८

यथा प्रकाशाभिमुखो न तिष्ठेत् कदापि सान्द्रोऽपि तमःप्रवाहः ।
तथा न सत्याग्रहसम्मुखस्था शक्तिर्हि काचिज्जगतीतले स्यात् ॥४९

यस्मादिदं विश्वमशेषजीवनिकायभूतं सचराचरात्म ।
प्रजायते तिष्ठति यत्र नित्यं यस्मिन्पुनर्लीयत एव सद्यः ॥५०

तन्नाम सत्यं परमात्मरूपमुपास्यमान पुरुषैः सुभक्त्या ।
तदाभिवर्षेदविचिन्त्यशक्तोर्ज्ञानं चिदानन्दमयं समन्तात् ॥५१

सत्यव्रतोऽसौ महतां महीयान् सत्यानुगानां परिनिष्ठितानाम् ।
शान्तात्मनां भक्तिमतां जनानां समग्रहीत् संघमथोत्सुकानाम् ॥५२

ततः स्वकीर्तिव्रजचारुचन्द्रप्रभासमुद्भासितदिक्कदम्बाः ।
समागतास्तत्र समस्तविद्यापारंगमा देशहितैषिणस्ते ॥५३

यस्मिन् दिने लोकमिमं विहाय श्रीलोकमान्यः स्वरथ मयातः ।
तद्दिव्यतेजः प्रविवेश तस्मिन् तदैव रामस्य पुरेव रामे ॥५४

छायेव देहस्य विभेव भानोः क्रियेव कर्तव्यपरायणस्य ।
नरर्षभाणां निवहः कृतात्मा गान्धिं महात्मानमगात् तदानीम् ॥५५

सोऽयं महात्मानमगात् सुभक्तो मनोवचःकर्मवपुर्भिरुत्कः ।
राजेन्द्रनामा सुधियां वरिष्ठः श्रद्धैकमूर्तिर्महसा ज्वलन्तम् ॥५६

प्रसंगतो यं बहुशो महात्मा पृष्टः सुहृद्भिस्त्वदनन्तरं कः ।
स्याल्लोकसेवी त्वमिवेत्यवादीत् प्रेम्णोद्धव कृष्णइवात्मकल्पम् ॥५७

मित्रारितुल्यं जनतासुभक्तं निःस्वार्थभावं तपसैधमानम् ।
शान्तं महाज्ञाननिधिं समीक्ष्य यं वै महात्मात्मसमं विवेद ॥५८

दुर्लङ्घ्यगाम्भीर्यमगाधबोधं सत्यैकनिष्ठं तपसि प्रवृत्तम् ।
स्वदक्षिणं वाहुमनेकवारं यं विश्ववन्द्यो न्यगदन्महात्मा ॥५९
यस्माद् भयं नाम बिभेति नित्यं वाग्देवता यद्वदनारविन्दम् ।
समादरादाश्रयते च यं वा प्राहुर्जना लौहमयं पुमांसम् ॥६०
वीरत्वविज्ञत्वसुनिर्भयत्वोदारत्वमेकत्र विभाति यस्मिन् ।
प्राप्तानुकूल्यं परिवर्द्धयमानं भेदश्च पारस्परिकं विहाय ॥६१
स वल्लभो धीरमतिः स्वदेश-सेवाभिलाषो जनतात्मबन्धुः ।
तपोनिधेस्तस्य महात्मनोऽभूद् भक्त्याश्रवः पार्श्वचरो दृढात्मा ॥६२
यः साङ्गवेदान् निखिलान् गुरुभ्यः सेवापरोऽध्यैष्ट महातपस्वी ।
भाषान्तराणामपि साधुविज्ञः कल्याणकामी जगतोऽखिलस्य ॥६३
सद्ब्रह्मविज्ञाननिधिर्मनीषी धर्मप्रियस्त्यागवतां वरेण्यः ।
गुरुं महात्मानमुपास्थितासौ भावेविनोवाः परमार्थदर्शी ॥६४
तावप्यभूतां कृतिनां वरिष्ठौ महात्मनः पार्श्वचरौ तदानीम् ।
श्रीमोतिलालो भुवि सुप्रसिद्धो लालोत्तरश्चापि जवाहरोऽसौ ॥६५
विनिःसरद्भिर्यशसां प्रवाहैः प्रकाशरूपैः सततं स्वकीयैः ।
सुधांशुसूर्य्याविव सर्वलोकं विभासयेते जनकात्मजौ यौ ॥६६
यः स्वीयतर्कैर्वदतां जनानां सद्योजवानाहरते प्रकामम् ।
तयोः परः सर्वविदां वरेण्यो जवाहराख्यस्तनयो बभूव ॥६७
स्वाध्यायकालेऽथ विदेशगं यं निवासवेशोत्तमभूषणाद्यैः ।
पिता तथा लालितवान् यथासौ सम्राट्कुमारप्रतिमो बभूव ॥६८

तपोनिधिर्य स्वमते प्रविष्टं मेने स्वराज्यं स्वकरस्थितं वै ।
दारिद्र्यदु:खौघदवानलो यत् स्याद्रामराज्यं चिर कांक्षितं नः ॥६९

जगत्प्रसिद्धं बिडलान्ववायपद्माकर रम्यमरीचिजालैः ।
उद्भासयन् सूर्य इव प्रकामं नाम्ना घनश्याम इति प्रसिद्धः ॥७०

यो राजनीतौ महतीं प्रतिष्ठां प्राप्तो मनीषी परमो वदान्यः ।
स्वदेशसेवाव्रतिनां वरिष्ठोऽनिशं महात्मानमनुप्रयातः ॥७१

योऽनुव्रजंस्तं महनीयकीर्तिं छायेव गान्धिं तपसां निधानम् ।
लोकोपकारं कुरुते निजार्थैः क्रियानियोगैकफलैरशेषैः ॥७२

सनातनीं भारतसंस्कृतिं यो-रक्षन्समन्तात् द्रविणौघदानैः ।
विराजते व्योम्नि शशीव लोके कृतीश्वरः श्रेष्ठिकुलावतंसः ॥७३

यश्चार्पयत् स्वीयमशेषमर्थं महात्मने देशहिताय वीरः ।
राणाप्रतापाय यथा हि भामा नियुद्धयते भारतरक्षणाय ॥७४

यं सर्वलोकाः कलिकर्णनाम्ना वदन्ति ते[1] यत्र च तथ्यवाचः ।
सोऽयं सुदक्षोऽखिलकृत्यवेदी प्राप्तो महात्मान्तिकमाशु वीरः ॥७५

यथार्थसत्यप्रियवाक्प्रयोगैः सौम्याकृतिर्यो रुचिरैर्गुणैश्च ।
जनान्तराकर्षणतोऽभिधानं कृष्णेति धत्तेऽनुगतार्थमेव ॥७६

निर्भीकतोत्साहमहोच्चशौर्यस्वदेशसेवाव्रतपालनेन ।
वदन्ति लोकाः पुरुषर्षभं यं सर्वे बिहारस्य नु केसरीति ॥७७

---

१—ते=सर्वलोकाः ।

अहिंसासत्यसद्विद्यातपोऽनुष्ठानभास्वरः ।

धीराग्रणीर्महाबुद्धिर्नीतिशास्त्रविशारदः ॥७८

चक्रवर्ती स आचार्यो राजगोपालनामकः ।

महात्मानमगाद्भक्त्या विकसत्कमलेक्षणः ॥७९

ततो महात्मानमनन्यभक्तश्चम्पावनीमण्डलमध्यवर्ती ।

छायेव देहं त्वरितं जगाम त्यागैकमूर्तिर्विपिनो विहारी ॥८०

यस्योपदेशं समवाप्य धीमान् सर्वं परित्यज्य विशुद्धभावः ।

स्वदेशसेवाव्रतमेव धर्मसारं सुभक्त्या धृतवान् कृतीशः ॥८१

इत्थं समागतसुनेतृगणैरनेकैर्विद्वद् वरैर्भुवि गतैः परमां प्रसिद्धिम् ।

प्रीतात्मभिः परिवृतो नभसीव चन्द्रस्तारागणैःसुविशदैः शुशुभे महात्मा

यो यो निर्धनलोकानामुपयोगात्मको विधिः ।

धर्मतो न बलिर्यत्र[1]—तत्राज्ञोल्लङ्घनं भवेत् ॥८२

इत्थं तद् युगपत् समस्तविषये दृश्यं तदा भून्नृप-

स्याज्ञोल्लंघनमेकतश्च परतस्तद्रक्षणायोद्यमः ।

स्वातन्त्र्याधिगमोल्लसत्सुवदनाम्भोजश्रियां जन्मिनाम् ।

देशद्रोहहतत्विषाञ्च निवहैरारभ्यमाणं तदा ॥

इति श्रीगान्धिचरिते महाकाव्ये श्रीसाधुशरणमिश्रविरचिते

द्वादशः सर्गः समाप्तः

---

१—बलिः=करः ।

# श्रीगान्धिचरितम्

## [ त्रयोदशः सर्गः ]

एकतोऽथ नृपरक्षकवीराः स्वाभिमानमदपूरितचित्ताः ।
अन्यतश्च जनतार्णववृद्धिःसाधु दृश्यमभवद्धि तदानीम् ॥१

यत्र यत्र नृपतेरधिकारस्तत्र तत्र तरणेरिव तस्य ।
गान्धिनोऽपि महिमातिमहीयान् दृश्यतेऽर्चित इवोत्सुलकोकैः ॥२

पूरितं वियदमुष्य महद्भिर्जीवताज्जयतु चेति महात्मा ।
सर्वतः श्रुतिमनोज्ञनिनादै र्बालवृद्धवनितादिसमुत्थैः ॥३

तस्य नाममहसा विनिदग्धा राजकीयपुरुषा हृतशोभाः ।
सर्क्षचन्द्र इव नाह्नि विरेजुर्दिद्युते च कमलैरिव लोकैः ॥४

तद् विलोक्य सुतरामतिभक्तिं देहिनामिह महात्मनि भव्याम् ।
राजकीयपुरुषा भयदीनास्तामर्षी स्वहृदये धृतवन्तः ॥५

स्वाधिकारपरिपालनमात्रहेतुनाथ जनता अपि सर्वाः ।
शुद्धभावमहिता व्यथमानाः प्रापयन् नृपभटा निजकाराम् ॥६

साधुवादसुमनोऽतिविचित्रमाल्यसत्कृतजना विलसन्तः ।
स्वीयदेशहितनाकसमानं बन्धनालयमवापुरदीनाः ॥७

प्रोल्लसत्कुशलमानवसङ्घैः पूजितैर्हि जनताभिरसंख्यैः ।
तत्परैः स्वविषयोद्धृतिमार्गे राजशासनविघातसमुत्कैः ॥८

शुद्धभावमहितैः शिशुवृद्धस्त्रीगणैर्नवसुसाहसधीरैः ।
निर्भयैर्विधृतगान्धिनिदेशैर्भूयतेस्म रुचिरस्मितशोभैः ॥९

एवमेव समरे जनतानां देशभक्तिदृढधैर्यवतीनाम् ।
गान्धिदर्शितसुपद्धतिगानां ते प्रभावशिखिना परिदग्धाः ॥१०

सर्वभूमिपतिमौलिविराजद्रत्नरश्मिनिकरार्चितपादः ।
स्वं विभाव्य समराढपयानं कम्पतेस्म नृपतिर्विहताशः ॥११

आह्वयत् सह सुधीभिरमात्यैर्भूपतिः कृतसुमन्त्रविमर्शः ।
मोहनं किल सुहृद्भिरुपेतं सन्धये सुमतिमान् स्वनगर्याम् ॥१२

आगमाय खलु तस्य महान्तं सानुगस्य नृपतिर्जलपोतम् ।
प्रैषयद् विरचितं कमनीयं सादरं द्रुतगतिं दृढकायम् ॥१३

नीतिशास्त्रनिपुणैर्निजमित्रैः स्वायतैः परमसिद्धिविधिज्ञैः ।
मन्त्रणां सह विधाय महात्मा प्रस्थितो नयनिधिर्विबुधेन्द्रः ॥१४

सर्वनीतिनिगमागमसिन्धुर्ज्ञानमूर्तिरमितैः स्वयशोभिः ।
भूषितो निखिललोकसुबन्धुर्मालवीमदनमोहनसूरिः ॥१५

नीतिशास्त्रनवकाननसिंहोलोकरत्नपदवीकृतपूजः ।
गान्धिभास्वदरुणः स मनीषी दुःखमोहतमसां सुनिहन्ता ॥१६

सत्यमेव परुषं मधुरं वा यो ब्रवीति न बिभेति कुतश्चित् ।
शुद्धभावपरिपूरितचेता वैरिणोऽपि हितमेव विधत्ते ॥१७

सर्वनीतिनिगमोदधिपारदृश्वबुद्धिविभवः समदृष्टिः ।
नेहरूर्निखिललोकसुमित्रं शान्तिपूर्णहृदयः खलु सोऽपि ॥१८

सापि नाम रमणीकुलरत्नं नायडूर्हि वचसामिव देवी ।
नीतिशास्त्रनिहितातिनिगूढतत्त्ववेदनधियात्तनुदेहा ॥१९

इत्थमेव सहगामि सुहृद्भी राजनीतिविदुषां हि वरिष्ठैः ।
सार्द्धमिन्दुरिव भैः रुचिमद्भिः पोतदेशमगत् स विराजन् ॥२०

पोतमारूहदसौ स महात्मा सानुगो जनिमतां प्रिय आत्मा ।
सर्वविश्वजनमानसहंसो वर्द्धमानयशसार्चितमूर्तिः ॥२१

यादृगात्मनि निजे परमा स्यात् प्रेष्ठता निखिलजन्मिगणानाम् ।
तादृगेव हि महात्मनि तत्र प्रेमराशिरतुलो विचकाशे ॥२२

वन्यवल्कलमिवातिपवित्रं स्वात्मना रचितमल्पकचीरम् ।
धारयन्नतुलदिव्यतपोभिर्भानुमानिव करैः सुविराजन् ॥२३

सानुगस्य निजदेशहितार्थं यास्यतोऽस्य जलधेः परपारम् ।
सर्वतो हि जनतासरिदीशो ऽभूतपूर्ववदथाशु विवृद्धः ॥२४

वर्द्धमानजनताजयशब्दो गर्जतो हि जलधेरति भीमम् ।
सम्यगन्तरयदात्मनि घोषं पूरयन् वियदशेषमुदग्रः ॥२५

पूजितः सुरभिभिः सुमनोभिः पुष्पवर्षिभिरिवामरवृन्दैः ।
मुम्बयीनगरवासिजनौघैर्भ्राजतेस्म सुमराशिरिवासौ ॥२६

प्राणिनामिह यतः खलु हिंसावर्जनं कुरुत एष महात्मा ।
तद्वशभून ननु सा प्रकृतिस्तं सेवितुं मधुपया ह्यजरूपा ॥२७

शान्तभावमहिताकृतिरम्या शान्तिरेव मनसो हि तदीया ।
आगतेव वपुषा भुवि छागी तस्य दुग्धममृतं खलु दातुम् ॥२८

सान्वगाद् वपुरिवामलछाया विश्वबन्धुममरद्रुममुच्चैः ।
प्राणिनां पुरुषकेसरिणं तं सर्वभूतसमदृष्टिमुदारम् ॥२९

सापि तत्र जनसंघकराग्रात् मुक्तमाल्यकुसुमावृतदेहा ।
शोभतेस्म महतां खलु संगात् सर्वमेव सुतरामिह पूज्यम् ॥३०

छागजातिरतुलास्ति जगत्यां सर्वदेशसुलभेति न भेदः ।
तामसौ न विजहौ ननु सन्तो वृत्तमैत्रपरिपालननिष्ठाः ॥३१

स्वर्चितो हि विविधैः कुसुमौघैः शंखवत्सुनिनदैरतिधीरैः ।
पूरयन् स हरितो नवपोतः प्रस्थितोऽति विसृजन् खलु वाष्पम् ॥३२

वीचिभिर्बहुविधाभिरजस्रं साधुगः प्रतिहतोपि स पोतः ।
पूरितं हि महतामनु भावैर्यत् तथैव भवतीति न चित्रम् ॥३३

यावदेव निकषा खलु यानं लन्दनावतरमेष्यति वेगात् ।
तावदेव पुरवासिजनौघैः सङ्कुलः समभवत्स महोत्कैः ॥३४

वालवृद्धवनितायुवलोकैः श्रद्धयार्चितुमिवोत्सुकितैस्तम् ।
तस्य दर्शनमहोत्सवकामैस्तैरभावि हसिताक्षिसरोजैः ॥३५

गान्धिदर्शनमहोत्सवपूरैः पूरितस्वहृदया जनसंघाः ।
प्रैक्षयन्नतिरयेण सामायत् दूरतोऽथ रुचिरं जलयानम् ॥३६

तावदेव जलयानमभूत् तद् वारिधेस्तटगतं कमनीयम् ।
धूमराशिमसकृत् परिमुञ्चत् पीयमानमिव दर्शकदृग्भिः ॥३७

दर्शनातिथिरभूत् स जनानां लोकलोचनसुधारसपिण्डः ।
यानतः प्रहसिताननरम्यो निष्क्रमन् विधुरिवाम्बुदगर्भात् ॥३८

दीर्घबाहुरुरसातिविशालो भव्यभालरमणीयमुखेन्दुः ।
प्रापयन् जनमनांसि निजान्तः प्राविशत्स हृदयेषु तदैषाम् ॥३९

सर्वमेव जनसंघमुदारप्रेमपावनसुधारससिन्धौ ।
मज्जयन् स शुशुभे कुमुदौघं शीतगोरिव मरीचिमहोर्मौ ॥४०

तद्विलोकनरसाभिनिविष्टा दूरतो विविधदिग्भ्य उपेयुः ।
बालवृद्धरमणीभिरुपेताः सोत्सुकाः प्रमुदिता जनतास्ताः ॥४१

श्रोत्रयोरिव दृशोरपि कर्तुं जन्मनः सफलतां निजचित्ते ।
स्यामहं हि ननु पूर्वमहं स्यां पूर्वमित्युरुजवाः खलु लोकाः ॥४२

तादृशी न च कदापि नगर्यां लन्दनेति भुवि कीर्तिमहत्याम् ।
गान्धिदर्शनसुधामथ पातुं यादृशी हि जनतार्णववृद्धिः ॥४३

आत्मना विरचितं कमनीयं चीवरं परिदधल्लघुवासाः ।
यष्टिमात्रशरणोऽपि शरण्यः प्राणिनां निखिलविश्वगतानाम् ॥४४

या त्रिभिर्निजगुणैरिव वर्णैः कृष्णलोहितसितैरभिसृष्टा ।
स्वामिव प्रकृतिमेष महात्मा तामजां सह निनाय तपस्वी ॥४५

मन्त्रिभिश्च निजरक्षकवर्गैः राजकीय पुरुषैः समयस्य ।
स्वागताय मतिमान्क्षितिनाथः प्रत्यगादवतरं जनपूर्णम् ॥४६

वीक्षणेन हृदयेऽपि तिरश्चां हार्दमेव जनयन्प्रति लोकम् ।
सस्मितास्यमधुराकृतिवाग्भिर्लोकमानसमनन्दयताशु ॥४७

वर्द्धमानतपसां स महिम्ना शन्तमेन समलंकृतकायः ।
शान्तया स्वशिखयेव शिखावान् दिद्युते च रुचिरस्मितशोभः ॥४८

भानुमानिव करैर्बहुसंख्यैर्ह्लादयन् जनसमूहसरोजम् ।
सर्वलोकहृदयस्थमुदग्रं मर्दयन्निव तमःसमवायम् ॥४९

एकतोऽस्य च सितोत्तमवासः प्रावृतो मदनमोहनचन्द्रः ।
सान्यतश्च विकसन्मुखपद्मा नायडूर्निखिलवाङ्मयदेवी ॥५०

पञ्चमेन किल जौर्जसुनाम्ना पार्थिवेन परमादरभावैः ।
सत्कृता मुमुदिरे विबुधेन्द्राः सत्क्रियैकवशगाः खलु सन्तः ॥५१

मार्गसेकनवतोरणचित्रां मण्डितां सविविधैः कुसुमौघैः ।
दर्शनोत्सुकजनैरभिपूर्णां लन्दनेतिनगरीं प्रविवेश ॥५२

राजमार्गमभितः स्थितलोका बालवृद्धरमणीभिरुपेताः ।
अक्षिभिर्नवसुधाकिरमुत्का वीक्षितुं विधुमिवोद्यतमेनम् ॥५३

विश्वबन्धुरयमेति महात्मा दुःखितामरतरुः करुणार्द्रः ।
यत्सुखं हि जनतासुखमेव दुःखमेव निजमस्ति तदीयम् ॥५४

यस्य नास्ति हृदि जातु विभेद आत्मनश्च परतोऽपि कदाचित् ।
मैत्रमेव विनिवृत्तविपक्षभावमस्ति ननु यत्र विवृद्धम् ॥५५

यत्प्रवृत्तिरखिलापि मृदम्भोवायुवन्निखिललोकहितार्थम् ।
स्रोतसा जलनिधाविव यत्र प्राणिनामभिगमोऽप्रतिषिद्धः ॥५६

इत्थं महौत्सुक्यकृतत्वरास्ते जनाः स्वकृत्यं किल विस्मरन्तः ।
प्रापुस्तमे जगदेकबन्धुमाहूयमाना जयशब्दघोषैः ॥५७

काचिद्दिदृक्षाविवशा सुमाल्यं धार्यं नु कण्ठे करयोर्न्यधत्त ।
लालाटिकं विन्दुमुरोजमध्ये त्वरान्विता कापि चकार वाला ॥ ५८

स्तनंधयं वालमतृप्तमेका विहाय वामा तरसा जगाम ।
दिदृक्षमाणा स्वगवाक्षजालं गान्धं महात्मानमुदारभावम् ॥५९

सरोजनालोपमहस्तमुक्तैर्लाजैः प्रसूनैरिव रम्यरूपैः ।
लता इवामुं स्मितपुष्पपूर्णाः समार्चयन् तं पुरवालकन्याः ॥६०

एवं समस्तैः पुरवासिलोकैरभ्यर्च्यमानो महतादरेण ।
सार्द्धं नृपेणैकरथस्थितोऽसौ समं सुहृद्भिः शुशुभे महात्मा ॥६१

स्तम्भैः काञ्चननिर्मितैर्बहुविधैरत्नाञ्चितैर्मण्डितं ।
रम्योद्यानसरःसरोजमहितं व्योमस्पृशं सादरम् ॥
प्रासादं समुपानयत् कृतिवरान् सार्थान्तदीयान्मुदा ।
गान्धिञ्चैकमृते क्षितीश्वरपतिर्ज्ञाता गुणानां स्वयम् ॥६२

इति श्रीगान्धीचरिते महाकाव्ये श्रीसाधुशरणमिश्र-
विरचिते त्रयोदशसर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## [ चतुर्दशः सर्गः ]

स्वाध्यायकाले न्यवसन्महात्मा यदीयगेहे कृतमैत्रभावात् ।
तत्पूर्ववृत्तप्रणयोपहूत इवाध्यवात्सीत् सदनं तदीयम् ॥१

परं समृद्धं नृपतेर्निकेतं विहाय माहेन्द्रमिव द्वितीयम् ।
अत्यल्पकं तन्निलयं जगाम भक्त्येकवश्या हि भवन्ति सन्तः ॥२

वनं प्रयातस्स पितुर्निदेशाद् यथा पुरा दाशरथिर्विहाय ।
महर्षिवृन्दं शवरीं ययौ प्राग् विश्वासश्रद्धार्चितभक्तिमूर्तिम् ॥३

पुरन्दरस्येव सुयोधनस्य प्रासादमभ्युन्नतमाशु हित्वा ।
प्रीत्या प्रपेदे विदुरस्य कृष्णो भक्तस्य तीर्थप्रतिमं कुटीरम् ॥४

तथैव सद्भक्तिमतीमहिंसा सत्यैकनिष्ठां तपसि प्रवृत्ताम् ।
तामेव संभावयितुं महात्मा धर्मप्रियां धर्मनिधिर्जगाम ॥५

तस्यां नगर्यां प्रतिगेहमेषा चर्चा प्रतिव्यक्त्यभवत्तदीया ।
यतेरिवैषां मनसः प्रवृत्तौ ब्रह्मेव गान्धिर्हि विराजतेस्म ॥६

शान्तस्वरूपस्य च सूनृतात्मवचोविलासस्य विशुद्धवृत्तेः ।
तपोविभूतेर्महिमातिभूमिं यातोऽत्र लोकैः परिगीयतेस्म ॥७

ततो महाज्ञाननिधिर्महात्मा स विश्ववन्धुर्महतो महीयान् ।
सर्वेषु भूतेषु समप्रवृत्तिः शत्रुत्वमित्रत्वविभेदहीनः ॥८

आकारितोऽभूद्ब्रिटिशाधिपेन प्रजासु जातं परितो महान्तम् ।
संक्षोभवह्निं नयवारिणामुं शान्तं विधातुं परिपत्स्थितेन ॥९

रथेन दिव्येन सुहृत्परीतः शान्तस्तपस्वी स्मितशोभितास्यः ।
राज्ञः सभां तामगमन्महात्मा जनेक्षणैः सादरमीक्ष्यमाणः ॥१०

दिदृक्षुभिर्लोकगणैः समन्तादाकीर्णमापोत्तमतोरणान्तम् ।
पेपीय्यमानस्तृषितैश्च तैस्तान् विलोकनैः स्वैर्मदयाञ्चकार ॥११

सोऽयं महात्मा जगदेकवन्धुः प्रियो निजात्मेव समस्तजन्तोः ।
यदीयगाम्भीर्यमहासमुद्रमग्ना नितान्तं न विभात्यशान्तिः ॥१२

यथापगानां वहवः प्रवाहा अवारितास्तोयनिधौ विशन्ति ।
तथा जनानां गतयोप्यमुष्मिन् विभूतिवर्य्ये जगदीश्वरस्य ॥१३

पूर्वं प्रकोष्ठं समतीत्य गान्धिः सुरक्ष्यमाणं वहुभिर्भटाग्र्यैः ।
स्तम्भैस्तु हैमै रचितं विशालैर्विवेश कक्षान्तरमर्च्यमानः ॥१४॥

तत्रैत्य तावत् स्वयमेव सम्राट् गुणप्रियस्तं गुणिनामुदारम् ।
सभाजयित्वा वहुमानपूर्वं प्रवेशयामास सभां स्वकीयाम् ॥१५॥

महार्हनानाविधरत्नराशिप्रभाकदम्बैः प्रतिबिम्बभाञ्जि ।
नरोत्तमैस्तैः समलङ्कृतानि रेजुर्विचित्राणि महासनानि ॥

तिग्मांशुमासाद्य यथा विकासमभ्येति सद्यः कमलाकरोऽन्तः ।
तथा महात्मानमवाप्य लोकः स्फुटारविन्दप्रतिमेक्षणोऽभूत् ।१७

अथ प्रसङ्गागतभारतीय-स्वराज्यवार्तासमये महात्मा ।
समन्त्रिवर्गं नृपतिं वचोभिः प्राबोधयद् धर्ममयैर्नयज्ञः ॥१८

प्रजाभिरक्षैव नृपस्य सृष्टौ हेतुर्नचान्यः श्रुतिभिः प्रदिष्टः ।
ताश्चेत् स्वयं कर्तुमलं प्रजानां संघो भवेत् किं फलमस्ति राज्ञः ॥१९

रक्ष्यो यदि स्यान् निजरक्षणार्थं शक्तः समन्तान्ननु रक्षकस्य ।
भवेन्नितान्तं परमः प्रमोदो गुरुर्हि भारः शिरसोऽपनीतः ॥२०

यन्नाम कष्टं नृपतेर्हि लोकरक्षार्थमस्तीति न गुप्तमेतत् ।
नक्तन्दिवं चेतसि यस्य रक्षाचिन्ताशये जागरणोप्यमुष्य ॥२१

न कस्यचित् स्वं परिलुण्ठितं स्यात् न केनचित् चापि बलात् कुतश्चित्
मिथ्याभियोगैर्न परस्य सत्त्वं विवञ्चयेत्कोऽपि कुतर्कजालैः ॥२२

नवा कलत्राणि हरेज्जनानां हन्यात् कृषिं वा नकृषीवलानाम् ।
भवेन्न सांघातिकदुश्चिकित्स्यव्याधिप्रकोपो जनतासु जातु ॥२३

संस्थापनीया हि सदौषधानां निर्माणशाला प्रभुणा स्वराज्ये ।
समन्विता वैद्यवरैर्द्रुतं या हरेज्जनानामिह रोगसंघान् ॥२४

लोकस्य शिक्षार्थमनेकयोग्योपाध्यायविद्यालयकल्पनाभिः ।
महीपतेरस्ति महान् प्रयासस्ततोऽन्यथा स्यात्सुतरामकीर्तिः ॥२५

एवं विपक्षाक्रमणैः प्रजानां स्वस्यापि रक्षां परितो विधातुम् ।
योग्यस्य सैन्यस्य ससाधनस्य परिग्रहो दुःखद एव राज्ञः ॥२६

सुदुर्बलान्नो बलिनो हि लोकाः प्रपीडयेयुर्मनसापि केचित् ।
परस्त्रियो मातृवदेव पूज्या ततोऽन्यथा दण्डविधिर्नराणाम् ॥२७

राज्ञो गुरुर्दण्डविधौ प्रयासो दुःसाध्य एवेति मतिर्मदीया ।
सागःसु दण्डो न निरागसश्चेद् दण्ड्या इति स्यात् नृपेतरकीर्तिः ॥२८

यद्वा प्रकृत्यादिविशुद्धवृत्तीन् क्षेमं प्रजानामभिलष्यतश्च ।
सुराजभक्तानपि सैनिकाग्र्यान् अन्वेष्टुमेवं नृपतेर्न कष्टम् ॥२९

यथान्नवस्त्रादिसुपूर्णता स्यात् प्रजागणानान्न तदर्थचिन्ता ।
एवं विधाने नृपतेरनन्तकृच्छ्रार्णवोर्म्मौ पतन त्ववश्यम् ॥३०

यदीयरक्षार्थमनन्तमेवमुर्वीपतेरस्ति सुदुःखराशिः ।
यदि स्वयं स्वं परिरक्षितुं ते शक्ताः नृपत्वाधिगमः किमर्थः ॥३१

अथ प्रजाभ्यो मुदितेन राज्ञा तत्पालनार्थस्तु निजाधिकारः ।
समर्पणीयो न च तत्र लोभः कार्यस्ततोऽमुष्य विवेकिता स्यात् ॥३२

निःस्वार्थभावो नृपतिः प्रजानां धर्मार्थमासां परिरक्षणं चेत् ।
करोति ताः स्युर्निजरक्षणार्हास्तदा भवेदस्य महान् प्रमोदः ॥३३

इत्थं महात्मा समदृग्यथार्थमिताभिभाषी मधुरां प्रशस्ताम् ।
व्याहृत्य वाचं कृतिनां वरिष्ठः शान्तो व्यरंसीत् वसुधैकबन्धुः ॥३४

ततो गुरुर्ज्ञानवतां मनस्वी महामनाः पण्डितमालवीयः ।
सर्वार्थशास्त्रार्णवपारदर्शी सुधीश्वरः प्राह वचो महार्थम् ॥३५

यमभ्यधत्तार्थमिमं महात्मा निष्पक्षपात प्रकृतेश्च राज्ञः ।
सक्षिप्तकायं विशदार्थरम्यं सूत्रस्वरूपं परमार्थभूतम् ॥३६

रक्षार्थमस्याः सकलाधिकारो ब्रिटेनराजेन पुरा गृहीतः ।
यो योग्यतायां पुनरर्पणस्य पणः कृतस्तत्समयोऽधुनायम् ॥३७

पातुं स्वदेशं परितः समर्थाः विभान्ति सर्वे ननु भारतीयाः ।
विहाय पारस्परिकं विभेदमेकत्वमेतह्यनुयन्ति कामम् ॥३७

सा न्यायमूर्तिर्भवतां महीशशिरस्थरत्नार्चितपादपद्मा ।
पितामही सत्यमदादमीभ्यो राज्ञी वचस्तत् प्रतिदानभूतम् ॥३८

यूयं यदि स्यात यदैव योग्याः पातुं स्वदेशं ननु शिक्षिताश्च ।
रक्षाधिकारो भवतां तदैव सुपाणिपद्मेषु समर्पितः स्यात् ॥३९

प्रतिश्रुतं पालयतो नृपस्य न्याय्येन मार्गेण च गच्छतोऽस्मिन् ।
लोके यशोराशिरुदेति यो वै जगत् सितं संतनुते शशीव ॥४०

तपस्विवर्येण महात्मना यद् बह्वर्थमल्पाक्षरमभ्यधायि ।
वाक्यं तदर्थो मनसा विचार्यः शान्तेन सर्वैः सचिवैरिदानीम् ॥४१

इत्थं समादाय गिरं निवृत्ते श्रीमालवीये कलभाषिणी सा ।
वाग्देवतेवालपितुं प्रवृत्ता सरोजिनी नीतिविदां वरिष्ठा ॥४२

जातिर्विभिन्नाप्यथ सम्प्रदायाः सन्त्यत्र पुंसां न तु भेदबुद्धिः ।
एकत्वसूत्रेण निबद्धभावाः स्वराज्ययोग्याः खलु भारतीयाः ॥४३

तस्मात् प्रतिज्ञापरिपालनोत्थकीर्तिव्रजस्रग्भिरधिश्रितश्रीः ।
विभातु सम्राट् नभसीव लोके चन्द्रोऽभ्रमुक्तः सुषमाम्बुराशिः ॥४४

तां सूनृतां वाचमुदीर्य तस्यां तूष्णीं गतायां समितौ च देव्याम् ।
महीपतेरक्षिसरोजकोणसङ्केतितो मन्त्रिवरोऽभ्यधत्त ॥४५

यदुक्तमार्य्यैर्वचनं महार्थं कर्णामृतं चेतसि नः प्रदत्तं ।
प्रमोदभाराम्रधुना तदर्थं युष्मभ्यमेते ननु धन्यवादाः ॥४६

सम्राट् स्वयं भारतवासिपुंभ्यः स्वातन्त्र्यदानं प्रति शुद्धभावः ।
किञ्चात्र नानाविधसम्प्रदायजात्युद्भवा सा विमतिः समन्तात् ॥४७

यया भवेद् वैरतरौ प्रवृद्धे परस्परानिष्टधियां जनानाम् ।
सदैव युद्धोद्यम एव देशे ह्यरक्षिताः स्युर्जनतास्तदानीम् ॥४८

ततोऽल्पसंख्यान् मनुजान् समूहो नृणां नितान्तं परिपीडयेत् चेत् ।
इत्थं भवेत् तत्र गुरुर्विभङ्गः शान्तेस्तथाऽराजकतापि नूनम् ॥४९

सत्यामशान्तौ प्रबला विपक्षा आक्रम्य कुर्युर्विषयं स्वनिघ्नम् ।
तस्मान्न यावत् कथितः स दोषो निर्मूलितस्तावदिहाधिकारः ॥५०

इत्थंनृपेणानुमतां प्रभाष्य वाचं सुविद्वान् सचिवोत्तमोऽसौ ।
बभूव तूष्णीं खलु भारतीयनृणां हृदम्भोजतुषारवर्षम् ॥५१

जग्मुः समाकर्ण्य गिरं तदीयां, म्लानिं सदस्या महतीमशेषाः ।
जिन्नाभिधस्तत्र तमर्थमेको माहम्मदः स्वीकृतवान् प्रहृष्यन् ॥५२

ततो महात्माऽखिललोकबन्धुर्वाचं तदीयांस्वशतीं विभाव्य ।
शान्तो न चुक्षोभ महार्णवाभः प्रीत्या प्रिय प्राह हितं मितञ्च ॥५३

न भारते भारतवासिपुंसां सौहार्दभावव्यतिरिक्तवृत्तिः ।
बन्धुत्वभावेन पुरस्कृतास्ते परस्परस्नेहधियो वसन्ति ॥५४

यश्चोपलम्भः स विरुद्धवृत्ते विदेशिनां स्यात् सहवासहेतुः ।
ऋते च तस्मात् सुतराममीषां मैत्री पर वर्द्धत एव नित्यम् ॥५५

यत्र क्वचिद् जातु परस्परेण कृतो विरोधाङ्कुर ईक्ष्यते सः ।
तत्रास्ति हस्तः किल शासकानां क्षीरेऽम्लवद् भेदकरो गरीयान् ॥५६

न संशयोऽस्मिन् विषये भवद्भिः कार्यः परं प्रेमवतामिदानीम् ।
परस्परं भारतवासिपुंसां सौहार्दभावस्तु समेधतेऽत्र ॥५७

स्वराज्यदानक्रियया सुमित्रं नूनं परं भारतवर्षमेतत् ।
दृशोऽस्तु पक्ष्मेव सदानुकूलं कार्यं भवद्भिर्वृटिशाधिपस्य ॥५८

ये चाल्पसंख्या निजजातिधर्मैर्न तेषु शंकावसरः कथंचित् ।
परार्थसम्पादनमेक एव धर्मोऽस्ति तत्राखिललोकबुद्धौ ॥५९

तस्मात् प्रजानां परितोषणाय स्वस्यापि देशस्य च मङ्गलाय ।
स्वराज्यदानं महते हिताय स्याद्‌द्वयभूसे वो यशसे च नित्यम् ॥६०

वाञ्छामि सन्धिं वृटिशाधिपेन सहाद्य धर्म्म्यं परतो यथा स्यात् ।
सद्भावपूर्णा महती सुमैत्री देशद्वयस्यापि चिरं सुखाय ॥६१

किन्त्वत्र दैवं प्रतिकूलमेव पश्यामि भूयोऽपि वदामि युष्मान् ।
सर्वत्र कार्ये परिणाम एव सर्वैः सुबुद्‌ध्या परिचिन्तनीयः ॥६२

ततोऽन्यथा शङ्कुरिवानुतापः स्वान्ते निखातो व्यथयेदजस्रम् ।
ततः स्वकार्ये कृतिनश्च पूर्वं तदायतिं नाम विवेचयन्ति ॥६३

इत्थं महात्मनि नृपं सचिवैरुपेतं सत्यप्रियैर्नयमयैर्वचनैः प्रबोध्य ।
तूष्णींगते स्वमतमाह नृपः पुरोक्तं भाव्यं मतिं हरति पूर्वमहो नराणाम् ६४

इति निजमत मेवं विश्वकल्याणवीजं
निखिलजनसुबन्धुः सम्यगाभाष्य देवः ।
अभवदतिगभीरो गान्धिरम्भोधिकल्पो-
विषमिव सजिहासन्देशयोर्वैरभावम् ॥६५

मा भूत् पीडितभारतीयजनतासंक्षोभदावानल-
ज्वालादग्धवपुर्हि लन्दननवोद्यानं क्षणात् किन्त्विदम् ।
भूयाद् भारतमित्रतामनुभवत् कीर्त्या श्रिया चोर्जितं
ना भूत्तद् विमना ययाविति कृतीगान्धिर्महात्मा ततः ॥६६

इति श्रीगान्धिचरिते महाकाव्ये श्री साधुशरणमिश्रविरचिते ।

॥ चतुर्दश सर्गः समाप्तः ॥

# श्रीगान्धिचरितम्

## [ पञ्चदशः सर्गः ]

अथासौ पुरुषव्याघ्रः सर्वप्राण्यभयङ्करः ।
समदुःखसुखो गान्धिः प्रतिष्ठासुरभूत्ततः ॥१

मालवीयेन गुरुणा सुहृद्भिश्चापरैर्वृतः ।
नक्षत्रैरावृतो नक्तं शशीव शुशुभे कृती ॥२

लोकबन्धुर्महात्मासौ विश्वकल्याणधीः सदा ।
यियासति पुनर्देशं भारतं सानुगोऽधुना ॥३

स्वपरत्वकृतो भेदो यस्य नास्ति कदाचन ।
सुहृदः सर्वभूतानां दयालोः शान्तिवारिधेः ॥४

सर्वेऽप्यकृतकर्माणः स्वार्थोपहतचेतसः ।
अवजानन्ति तं मूढाः सर्वकल्याणकारिणम् ॥५

द्वयोर्वै दशयोर्मध्ये मैत्रीस्थापनहेतुकम् ।
सन्धिमार्गं शिवं मत्वा निमन्त्रित इहागतः ॥६

एभिर्मूढैरसौ सन्धिर्दोषमुत्पाद्य दूषितः ।
तथाप्यमुष्य हृदये स्नेहोऽस्मासु विवर्द्धते ॥७

तत्रासन्तं समुत्पाद्य दोषमेभिर्निराकृतः ।
समुन्नतिकरः सन्धिः स्वस्यैव च विशेषतः ॥८

तथाप्यमुष्य सद्भावः पूर्ववत्स्नेहपूरितः ।
मित्रामित्रसमस्यास्य न विभेदो मनागपि ॥९

अन्योन्यमेवं जल्पन्तः पुरवासिजनास्तदा ।
बालस्त्रीवृद्धसहिताः पोतावतरमाययुः ॥१०

तृषितैरिव लोकानां लोचनैर्निश्चलैरसौ ।
न्यपीयत महौत्सुक्यादतृप्तैरिव सादरम् ॥११

जयताज्जीवताद्गान्धिः प्राणिनां प्रिय आत्मवत् ।
यस्य दर्शनतः पुंसां हृद्यानन्दामृतं महत् ॥१२॥

चकोरा इव तं सर्वे निर्निमेषदृशो जनाः ।
मन्दस्मितकृताह्लादं पश्यन्तिस्म तपोनिधिम् ॥१३

ततो महात्मा सस्त्रीकान् बालवृद्धसमन्वितान् ।
लोकान् समुत्सुकान् वीक्ष्य सान्त्वयन्निदमब्रवीत् ॥१४॥

धर्मेण जीवनं लोकाः सार्थकं देहिनां मतम् ।
ततो विहीनवृत्तीनां प्राणिनां पशुता ध्रुवम् ॥१५

अहिंसा सर्वभूतेषु सत्यं विश्वोपकारिता ।
परमात्मनि विश्वासो धर्मोऽयं परमो मतः ॥१६॥

सन्तीमानि तदङ्गानि त्यागः सन्तोष आर्जवम् ।
धृतिः सहिष्णुता लोकसेवोपकृतिरादरात् ॥१७

इति स्वीकुर्वतां पुंसां स्वाचारैः सफलं भवेत् ।
जीवितञ्चामलं नित्यं हृदयं शान्तिसागरम् ॥१८

स्रग्भिः सुरभिपुष्पाभिर्लाजैरिव सुमोत्करैः ।
जयशब्दैः सुतुमुलैर्हृद्यैरम्बरगामिभिः ॥१९

प्रणिपातैश्च ते सर्वे महात्मानं यशोनिधिम् ।
भक्त्या सभाजयामासुः पुरवासिजनास्तदा ॥२०

प्रशान्तार्णवगम्भीरो विश्वकल्याणभावनः ।
आमन्त्र्य जनताः सर्वाः स च पोतं समाविशत् ॥२१

रयेण महता पोतस्तदद्भुतमिवागमत् ।
दारयन् सोर्म्मिसलिलं नीरधेरतिदुर्गमम् ॥२२

जवेन महता गच्छन् नक्तंदिवमदो वभौ ।
मैनाकस्य गिरेः शृङ्गं सागरोर्म्मिष्विवोल्लसत् ॥२३

ततो भुवि पुरी श्रेष्ठा महेन्द्रनगरीव या ।
मुम्बयी यात्रिसार्थानां साभवत् दृष्टिगोचरा ॥२४

स्वस्तिकादिमहासौधैः सपताकैरलङ्कृतैः ।
दूरतः शुशुभे रम्या नगरीवामरावती ॥२५

प्रागेव तत्र सम्वादं प्राप्य वैद्युतमुत्सुकाः ।
दिदृक्षाप्रवणाः सर्वे पुरवासिन आययुः ॥२६

उपसंघट्टमासाद्य स्थितात् पोतादसौ कृती ।
शैलादिवातरत् श्रीमान् मन्दस्मितमनोहरः ॥२७

यस्य हर्षो न च ग्लानिः सिद्ध्यासिद्ध्योः कदाचन ।
दृश्येते हृदये सान्द्रानन्दामृतसुनिर्भरे ॥२८

तमादित्यमिवासाद्य पद्माकर इवावभौ ।
विकसद्वदनाम्भोजो जनौघः स तदाभवत् ॥२९

अनुद्वेगकरेणासौ तपस्वी तेजसा वृतः ।
पीयूषवर्षिणा नृणां दृगम्भोजविकाशिना ॥३०

आजानुवाहुः पीनोरः सुश्यामो नलिनेक्षणः ।
सर्वेषामपि भूतानामभयस्थानमीप्सितम् ॥३१

लोकानामक्षिभिः सान्द्रपक्ष्मभिः प्रेमनिश्चलैः ।
श्रद्धया पीयमानोऽभूत् दृष्टपूर्वोऽप्यदृष्टवत् ॥३२

लोकानां जयनिर्घोषो भित्वा गगनमण्डलम् ।
स्वर्ययौ भक्तिमाख्यातुं पुंसामस्मिन् सुरेष्विव ॥३३

मनोहराभिर्मालाभिः प्रसूनैर्बहुवर्णकैः ।
रचिताभिर्जनैर्भक्त्या प्रणमद्भिः समर्चितः ॥३४

अभिवृष्टो मुदा लोकैरमरैरिव सर्वतः ।
पुष्पावलीभिर्नभसः पातिताभिरिवावभौ ॥३५

एवं सम्मानितः प्रीतैर्भारतीयैर्जनव्रजैः ।
वाचा मधुरयोवाच महात्मैतान् नरर्षभः ॥३६

सम्यक् प्रबोधितोऽस्माभिः सम्राट् सामात्यमण्डलः ।
स्वराज्य भारतीयेभ्यः प्रेम्णा दातुं प्रतिश्रुतम् ॥३७

किन्तु दिष्टबलं लोके किमप्यस्ति महाबलम् ।
प्रतिक्रियाक्रिरहितं स्वकार्यं कारयत्तदा ॥३८

यादृशाः प्राणिनः सर्वे प्रतीपे साधुबुद्धयः ।
मत्वानर्थहितं तत्र प्रवर्तन्ते विमोहिताः ॥३९

गृहीतदर्पणा लोका न पुरःस्थावलोकिनः ।
पृष्ठस्थमेव मन्यन्ते पुरस्थं जातविभ्रमाः ॥४०

एवं मुग्धधियः सर्वे दैवेन बलिना शिवम् ।
नागृष्णन् दर्शितं मार्गमस्माभिः सचिवव्रजाः ॥४१

स्वराज्यं निश्चितं भद्रा भवतां यदभीप्सितम् ।
युष्माभिश्च सदोत्साहैः शान्तैर्भाव्यं यथा विधि ॥४२

धृतसत्याग्रहास्त्राणामहिंसाव्रतधारिणाम् ।
विजयो भवतामेव भवेदत्र न संशयः ॥४३

एवमभ्यर्थिता दातुं यदि नेच्छन्ति तेऽबुधाः ।
यौष्माकपाणिपद्मेषु दास्यन्ति स्वयमागताः ॥४४

किन्तु शान्तैः स्वसिद्धान्तसत्याग्रहरणस्थितैः ।
युष्माभिर्भूयतामेव उपदेशोऽस्ति मेऽधुना ॥४५

इत्थं समुपदिश्यैतान् महात्मा स्वकुटीमगात् ।
तन्मनांसि समाकर्षन् करानिव विभावसुः ॥४६

ततः प्रतीचीदिग्भागं करैररुणयन् रविः ।
जगामास्तगिरेः शृङ्गं प्रपन्नं तम उन्नयन् ॥४७

यावदेव तमस्तोमैर्जगदाक्रम्यतेऽखिलम् ।
तावदेवोदगात् पूर्णं चन्द्रविम्बं करोज्वलम् ॥४८

रवावस्तंगते प्रीतो मुमुदे तमसां गणः ।
प्रभामयं विलोक्येन्दुं हताशं तममन्वगात् ॥४९

अहन्यर्ककरैश्चण्डैः सन्तप्तं निखिलं पियत् ।
सायं हिमांशुं पीयूषवर्षिणं प्राप्य मोदते ॥५०

नक्षत्रमालया सम्यक् भूषितापि तमस्विनी ।
भर्तृहीनेव रमणी रेजे न विधुना विना ॥५१

कर्पूरहिमपिण्डाभविम्बेनामृतवर्षिणा ।
शशिनैकेन विभ्रेजे रमणीयं विभावरी ॥५२

कर्पूरगौरैः शुभ्रांशोर्ज्योत्स्नापूरैः सितीकृतम् ।
पयःफेनोपमं जातं जगत् सर्वं चराचरम् ॥५३

सुधामयूखमालाभिः सिञ्चन्तं शर्वरीश्वरम् ।
नयनानन्ददं चन्द्रं नलिनी न निरीक्षते ॥ ५४

इक्षुकाण्डं परित्यज्य मधुरं करभो यथा ।
पिचुमन्दं महातिक्तं सम्प्राप्य कुरुते मुदम् ॥५५

तथा तिग्मांशुमासाद्य विकसत्कमलानना ।
पद्मिनी भजते प्रीतिं रुचिर्भिन्ना हि संसृतेः ॥५६

जडोऽपि जलधिर्वीक्ष्य हिमांशुं गगनोदितम् ।
सान्द्रामन्दमहानन्दस्तरङ्गैर्वर्द्धतेऽभ्रगैः ॥५७

कुमुद्वतीं भजत्येष श्लिष्यन् गौरैः करैर्विधुः ।
पद्मिनी कुपितेवासौ न तस्मिन्ननुरज्यति ॥५८

हिमांशोरंशुभिर्नक्तं लालितां नु कुमुद्वतीम् ।
पश्यन्ती पद्मिनी पश्चात्तापात् नीलसरोरुहा ॥५९

रजन्यां तु व्यतीतायां ममाप्यर्कं करैर्भवेत् ।
केलिरित्याशया जाता नलिनी रक्तपङ्कजा ॥६०

अह्नि द्युमणिसंयोगं प्राप्तुं वारिणि पद्मिनी ।
तपस्यन्तीव सा नम्रसरोजवदना किमु ॥६१

चन्द्रमा मनसो जातो हरेरानन्दरूपिणः ।
तस्मात् स परमानन्दसुधावर्षी सुधाकरः ॥६२

ततः सर्वेन्द्रियेशस्य सुधांशोरुदये जगत् ।
परमानन्दपीयूषसागरोर्मौ निमज्जति ॥६३

वासवाशामुखं वीक्ष्य चन्द्रचन्दनविन्दुमत् ।
वारुणी कुपितेवाभूदरुणास्या क्षणादसौ ॥६४

वयस्याकर्णयोर्नीलमुत्पलं भूषणीकृतम् ।
विधोदुग्धांशुभिः काचित् सितं वीक्ष्य सुविस्मिता ॥६५

नक्षत्रमालया राजन् चन्द्रः चन्द्रिकया युतः ।
परमानन्दधामासीत् लोकानां प्रीतिवर्द्धनः ॥६६

क्वचित् चकोरसंघानां चन्द्रिकायानजोत्सवः ।
चक्रद्वन्द्वञ्च कुत्रापि स्मरवाणाग्निविह्वलम् ॥६७

क्वचित् कुमुद्वती चन्द्रमयूखः परिरभ्यते ।
नलिनी नतपद्मास्या क्वापि सापत्नवैभवैः ॥६८

सूर्याचन्द्रमसोरेवं पश्यन्नस्तोदयौ जनः ।
पातोत्पातौ हि लोकानां नियतौ नेति शिक्षते ॥६९

उदयास्तमयो भावः चक्रवत् परिवर्तते ।
सर्वेषामपि वस्तूनां नियत्या परिकल्पितः ॥७०

किन्तु भारतसूर्यस्य चिरादस्तमुपेयुषः ।
तमस्तोमाभिभूतस्य नोदयाशा विभाव्यते ॥७१

धैर्योत्साहवतां पुंसां प्रारब्धमनुतिष्ठताम् ।
विमृश्यकारिणां मन्ये सिद्धिं करगतामिव ॥७२

यत्रोदयस्य हेतुत्वमस्ते नियमितं भवेत् ।
तदस्तं नाम मन्यन्त उदयं कृतबुद्धयः ॥७३

नोदयाय यदस्तं तु कल्पतेऽत्र कदाचन ।
तदेवास्तमिति प्रोक्तं पुनरावृत्तिवर्जितम् ॥७४

एवं चिन्तयतस्तस्य तपोमूर्तेस्तदाभवत् ।
प्रभातरूपा रजनी लोहिताम्बरशोभिनी ॥७५

यावद् मरीचिमालाभिर्नलिनानि विकाशयन् ।
योजयन् कोकमिथुनं जगदानन्दयन् रविः ॥७६

रिपूनिव तमोव्रातान् निघ्नन् व्योमावभासयन् ।
उदगात् तावदेवापुर्नेतारः सर्वतो दिशः ॥७७

उपकूलं महाम्भोधेर्मुम्बय्यां वसुधातले ।
विश्रुतायामभूत् पुर्य्यां नेतृणां परिषत् शुभा ॥७८

यथा विकासितं पद्मं दूरादायान्ति षट्पदाः ।
तथोपजग्मुर्नेतारो महात्मानं तपोनिधिम् ॥७९

समेत्य सर्वे सोत्साहाः विकसन्मुखपङ्कजाः ।
वृष्यां कौश्यां सामासीनं प्रशान्तमिव सागरम् ॥८०

दीर्घबाहुं घनश्यामं नलिलायतलोचनम् ।
विशालभालं सम्पूर्णशरच्चन्द्रोपमाननम् ॥८१

कम्बुग्रीवं महोरस्कं भातोद्धारमात्मना ।
चिन्तयन्तं महायोगीश्वरं विश्वहिते रतम् ॥८२

गिरीन्द्रमिव दुर्लङ्ध्यं पाथोधिमिव दुर्गमम् ।
तमोव्यूहं विनिघ्नन्तं त्विषेवार्कं व्योलकयन् ॥८३

सर्वातिशायिना तस्य महिम्ना महसां निधेः ।
पृथग् भूतानरेजुस्ते करैः सौरैर्ग्रहा इव ॥८४

ततः शीलवतामाद्यो लोककल्याणधीः सदा ।
मान्यो ज्ञानवतां सत्याहिंसाव्रतविभूषितः ॥८५

चक्रपाणिः प्रसन्नात्मा शुक्लाम्बरधरः शुचिः ।
सूत्रविन्याससंलग्नो धीराणाञ्चाग्रणीः सदा ॥८६

अन्वर्थनामा राजेन्द्रो मेधावी बुद्धिसागरः ।
शान्तिमूर्तिर्महात्यागी शरीरीवोत्तमं तपः ॥८७

महात्मानमगादन्तर्ज्योतिषा भूयसा परम् ।
समुज्ज्वलन्तं दिव्येन भास्वन्तमिव तेजसा ॥८८

लोकवल्लभतां प्राप्तो वल्लभो वदताम्वरः ।
महासाहसिको धीरो भीतेरपि भयप्रदः ॥८९

मनस्वी ज्ञानसम्पन्नो निर्भयः प्रियसत्यवाक् ।
महात्मानमुपाव्राजीत् देशोद्धारचिकीर्षया ॥९०

महामतौ वलारातेर्गुराविव मनस्विनि ।
यस्मिन् तपोनिधेः तस्य परितुष्यति मानसम् ॥९१

राजगोपालनामासौ नीतिशास्त्रविचक्षणः ।
वायुरग्निमिवायासीत् गान्धिनं पुरुषोत्तमम् ॥९२

भाजनं सर्वविद्यानां रत्नानामिव सागरः ।
श्रीजवाहरलालोऽसौ महात्मानमुपेयिवान् ॥९३

मालवीयो महाबुद्धिर्मनस्वी वाग्विदाम्वरः ।
महसा भ्राजमानोऽसौ सभास्थलमुपेयिवान् ॥९४

घनश्यामोऽपि वीराणां धीराणाञ्चाग्रणीः सुधीः ।
कल्पद्रुमोऽर्थिसार्थानां धनदो धनिनामगात् ॥९५

विहारकेशरी कृष्णसिंहो बुद्धिमतां वरः ।
महोत्साहः सदा देशसेवाप्रवणमानसः ॥९६

धीमाननुग्रहोनारायणसिंह शुचिव्रतः ।
श्रीमद्गान्धिपदाम्भोजसेवासंलग्नमानसः ॥९७

समीयतुर्महात्मानं महाभाग यशोनिधिम् ।
उभावुत्साहसपन्नौ देशसेवाभिलाषिणौ ॥९८

स्वदेशसेवाव्रतिनां श्लाघ्यो बुद्धिमतां वरः ।
चम्यकारण्यवास्तव्यो विपिनोऽपि समाययौ ॥९९

इत्थं समागताः सर्वे नेतारः सर्वतो दिशः ।
स्वतन्त्रं भारतं कर्तुं महोत्साहा महौजसः ॥१००

महासभायां मुम्बय्यामुपस्थातुं मनस्विनः ।
सुरासुराहवे दान्तं गान्धिं हरिमिवामराः ॥१०१

लोकातिशायिलावण्यं यं वीक्ष्य मनुते जनः ।
भवान्तरगतं कामं लोचनामृतवर्षिणम् ॥१०२

गाम्भीर्ये वारिधिः स्थैर्ये शैलेन्द्रो यः सुधीश्वरः ।
पार्थः शौर्य्ये प्रतिज्ञातपूर्तौ भीष्म उदारधीः ॥१०३

जितेन्द्रियो महात्यागी देशसेवामहाव्रतः ।
विज्ञाता सर्वविद्यानां कलानाञ्च विशेषतः ॥१०४

प्राणान् धनानि सर्वेषां लुम्पतां निर्दयात्मनाम् ।
समुद्धतगुरण्डानामुत्पातैर्व्यथितो भृशम् ॥१०५

पीड्यमानान् जनान् वीक्ष्य क्रन्दतो भयविह्वलान् ।
प्रत्यज्ञासीत् महाबाहुः सन्तप्तः करुणालयः ॥१०६

यावद्भारतवर्षस्य स्वातन्त्र्यं नाधिगम्यते ।
तावत् पदार्पणं नात्र कुर्य्यामेतद् व्रतम्मम ॥१०७

एतदर्थं वहिर्गत्वा तपः सोद्योगमात्मना ।
चरेयं वा निजान् प्राणान् त्यजेयमिति निश्चितम् ॥१०८

तस्यापि देशरत्नस्य वीरस्य च मनीषिणः ।
वसोः सुभाषचन्द्रस्य द्वीपान्तरनिवासिनः ॥१०९

तदान्दोलनसंग्रामकर्तव्यत्वसमर्थिका ।
सम्मतिः समगाद् गान्धिं गुरुंदेवं दृढव्रतम् ॥११०

ततो गुप्तचरद्वारा सर्ववृत्तान्तवेदिनः ।
साशङ्काः शासकाः सद्यो विषोदन्तो व्यचिन्तयन् ॥१११

वहिःस्थितानामेतेषां प्रभावानिलदीपितः ।
लोककोपानलश्चण्डो न प्रशाम्येत् कदाचन ॥११२

तदान्दोलनसरम्भात् प्रागेव किल शासकैः ।
निगृह्य सर्वे नेतारः कारावासमवापिताः ॥११३

पूर्वमेव महात्मानं तदनर्थस्य कारणम् ।
मत्वा निजगृहुः पश्चात् नेतॄनन्यान् प्रयत्नतः ॥११४

न जातु मानसे यस्य शत्रुमित्रत्वभावना ।
लोकमात्रस्य कल्याणं सर्वदा यः समीहते ॥११५

तं सर्वभूतसुहृदं महात्मानं तपस्विनम् ।
कारां नयन्तस्ते स्वीयमच्छिन्दन्नाश्रयं दृढम् ॥११६

वलान्निगृह्य सर्वेषां नेतॄणां स्वपतां निशि ।
कारागारप्रवेशस्य वृत्तं साकं महात्मना ॥११७

आबालवृद्धैः सर्वत्र लोकैरधिगतं क्षणात् ।
आकाशवाण्या यन्त्रेण वैद्युतेन च विस्तृतम् ॥११८

निरागसस्तु नेतारो जनतामार्गदर्शकाः ।
स्वोन्नतेः साधनीभूतसभायां लग्नमानसाः ॥११९

कृतास्तु कारामानीय जनसम्पर्कवर्जिताः ।
यातनापीड़िताः केचित् जनाश्चाज्ञातवासिनः ॥१२०

यः प्रजानां सुकल्याणं कदापि न चिकीर्षति ।
न वा तत् कुर्वतो नेतॄन् सहते दुष्टभावनः ॥१२१

किमनेन फलं राज्ञा लोकविप्रियकारिणा ।
योऽनिशं जनताश्रेय स्तरोरुच्छेदको भृशम् ॥१२२

ततः क्रोधानलः सर्वलोकानां ववृधे महान् ।
प्रलयाग्निरिवोद्भूतो ज्वालाकुलितविग्रहः ॥१२३

यथौर्वाग्नेः पुरः स्थातुं न जलौघः प्रभुर्भवेत् ।
तथा क्षुब्धात्मनां पुंसां न कोऽपि पुरतस्तदा ॥१२४

बालस्त्रीवृद्धवर्गेषु छात्रेषु च विशेषतः ।
चारकेषु च सर्वेषु प्राकृतेषु जनेषु च ॥१२५

सम्बभूवाद्भुतं शौर्यमलौकिकमिवोल्लसत् ।
कदाप्यदृष्टं केनापि नान्यैस्त्प्रेक्षितं तथा ॥१२६

महावेगं दुराधर्षमविसह्यं वपुष्मताम् ।
व्याप्नुवत् सकलं लोकं सूर्यांशुरिव सर्वतः ॥१२७

यदग्रे सहसा भूभृद् भवेत् रेणूकृतः क्षणात् ।
समुच्छलन्महावीचिः समुद्रश्चापि शोषितः ॥१२८

मर्य्यादां समतिक्रम्य प्लावयन्निव मेदिनीम् ।
जनतासागरः सद्यो गर्जन्नैधत सर्वतः ॥१२९

मन्ये महात्मनस्तस्य सर्वलोकातिशायिनः ।
महिम्नः तन्नु दिव्यस्य फलमाश्चर्यकारकम् ॥१३०

एकतस्तु महाशौर्य्यं दर्पोद्रेकोच्छलज्ज्वलत् ।
यत्पुरो न महेन्द्रस्य स्थातुं शक्तिरलं भवेत् ॥१३१

अन्यतो वदनाम्भोजम्लानता क्षीणशक्तिता ।
पराभूतिर्जवेनाजेरपक्रमणशीलता ॥१३२

केचित् क्वचित् समारुह्य धूमयानं महाजवम् ।
कृतवन्तो निजायत्त गतागत्योः स्वकेच्छया ॥१३३

वानरैरिव रामस्य करशस्त्रैर्जनव्रजैः ।
भग्ना राजगृहा मुख्याः प्रायो लङ्केव दुर्द्दमैः ॥१३४

एवं सर्वत्र संक्षुब्धलोककोपानलोल्वणः ।
ज्वालाभिः सर्वतो दग्धं राजैश्वर्यमशेषतः ॥१३५

तदैव मुम्बयीपुर्यां जलसैनिकमध्यतः ।
विद्रोहः समभूद् भूयान् वृटिशानां भयङ्करः ॥१३६

येनाशु कम्पितः सम्राट् सामात्यो भीतिमानभूत् ।
विमृश्य सचिवैः साकं महात्मानममुञ्चत ।'१३७

कारागृहात् वहिर्भूते सानुगे तु महात्मनि ।
शशामोपद्रवः सर्वस्तमो भानूदये यथा ॥१३८

अथ भारतवर्षीयाः शिक्षिता नीतिवेदिनः ।
पारतन्त्र्यं न सोढारो निजगौरवमानिनः ॥१३९

सैनिकेषु च लोकेषु विक्षोभो वर्द्धतेऽधुना ।
सर्वे स्वराज्यमिच्छन्ति निजप्राणव्ययैरपि ॥१४०

वर्द्धते लोकसंख्यात्र प्रत्यहं व्ययवर्द्धिनी ।
तद्योगक्षेमयोः पूर्तिः कर्तव्या च महीभृता ॥१४१

पूर्तौ सर्वार्थनाशः स्यादपूर्तौ चार्द्धचन्द्रता ।
पक्षयोरनयोर्भूयाननर्थः खलु दृश्यते ॥१४२

तस्मात् बृटेनराजस्य तत्प्रजामण्डलस्य च ।
स्वराज्यदानमेवैभ्यः शुभोदर्कं विभाति नः ॥१४३

प्रतिज्ञापालनोत्थैवं सम्राजः कीर्तिरुत्तमा ।
तया स्यात् भारतीयैर्नः सह मैत्री सुखावहा ॥१४४

किन्तु सोपधि तद् यत्नात् विधेयं कृतिनांवरैः ।
भवेयुर्वशगा नित्यं पुनर्बृटिशभूभृतः ॥१४५

भूभृद्वृन्द समर्चिताङ्घ्रिकमलः,
सार्द्धं निजैर्मन्त्रिभिः
सम्मन्त्र्यैवमसौ महीपतिरिदं
मुक्तं व्याधाद् भारतम् ।

सर्वाङ्गैर्निखिलैर्बलैश्च सहितं-
कोशैरशेषैर्युतम्
संग्रामेण विनैव तन्नु महतो
गान्धेर्महिम्नः फलम् ॥१४६

इति श्रीमद्गान्धिचरितेमहाकाव्ये-
श्रीसाधुशरणमिश्रविरचिते
पञ्चदशः सर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## [ षोडशः सर्गः ]

ततः प्रतीतं किल कूटनीतौ स मन्त्रिमुख्यो बृटिशाधिपस्य ।
क्रीप्सं व्यवस्थापयितुं स्वराज्यं प्रदीयमानं प्रमुखं चकार ॥१

प्राप्तस्वराज्या अपि भारतीयाः परस्परं वैरधियो भवेयुः ।
तथा विधातुं खलु शिक्षितोऽसौ समाचरद् यत्नमनेकरूपम् ॥२

त्रिधा विभक्ते खलु भारतेऽस्मिन् भवेदमीषां कलहो महीयान् ।
येनाशु भूयो बृटिशेश्वरस्य वश्याः पुनस्ते च सुखेन सर्वे ॥३

माहम्मदानां प्रथमो विभागः राजप्रजानामपरश्च कल्प्यः ।
ततोऽवशिष्टाऽखिलभारतीयलोकात्मकः स्यादिति मे व्यवस्था ॥४

महान् हि वर्गो न यथाल्पवर्गं प्रबाधयेत् स्वार्थवशेन कश्चित् ।
तस्मादिहावश्यकता विभाति सम्यक् विभागस्य च लोकशान्त्यै ॥५

पुरा यथा येभ्य उपागृहीतं राज्य तथा तेषु समर्पणीयम् ।
एतद् द्वयं तत् परिकल्पनायाम् हेतुर्महान् स्यात् परिपुष्कलोऽसौ ॥६

इत्थं व्यवस्याथ कृती व्यतानीत् स्वजालबन्धं मधुरैर्वचोभिः ।
विमोह्य नेतॄनथ यावनांश्च कृत्वानुकूलान् विपरीतवृत्तीन् ॥७

ऋते महात्मानमगाधबुद्धिं शुद्धात्मभावं सुदृढप्रवृत्तिम् ।
तद् वागनायो वशगान् व्यहास्त नेतॄनशेषान् त्वरयापि विज्ञान् ॥८

तमःप्रवाहो न यथांशुमन्तं कदाचिदभ्येति विवृद्धरूपः ।
तथा न तद् वञ्चनदाक्ष्यमागाद् गान्धि महात्मानमुदारभावम् ॥९

लघुर्हि वर्गः पृथगेव नैजं स्वातन्त्र्यमासाद्य प्रकल्पयेत ।
स्वीयं विधानादिकमात्मयोग्यं यथास्य भूयात् परमोपयोगः ॥१०

अथाधुना भारतवर्षमध्ये माहम्मदो नाम लघुर्हि वर्गः ।
विलोक्यते तस्य विभाग इष्टः संख्यानुकूलो विषयश्च तस्य ॥११

महीभृतामस्ति ततोऽपरोऽयं वर्गः स्वराज्यं पृथगस्य भूयात् ॥
हेतु[१]र्द्वितीयोऽत्र नियामकोऽसौ शिष्ये भवेद् भारतवासि पुंसाम् ॥१२

अखण्डरम्य निखिलाङ्गपूर्णं तद् भारतं खण्डितमङ्गहीनम् ।
सम्पादयन्तीमपि तद् व्यवस्थां तथा स्वराज्यस्य समेऽग्रहीषुः ॥१३

कार्य्यं शुभं विघ्नशतैरवश्य विहन्यमानं भवतीति दृष्टम् ।
तच्चेदखण्डत्वसमर्थनस्य वादे विनश्येद् यदि सा क्षतिर्नः ॥१४

प्राप्ते स्वराज्ये तु तदर्थपूर्तेर्भवेदनेकोऽवसरोऽनुकूलः ।
दैवं शिवं वाप्यशिवं नराणां फलं प्रदत्ते समये नु लोके ॥१५

एवं विमृश्याथ सुनेतृवर्य्याः क्रिप्सं विधानं समुपेक्षणार्हम् ।
गृहीतवन्तो मनसातिहृष्टा उदर्कदर्शित्वमुपेयिवांसः ॥१६

वेदान्तरिक्षाभ्रभुजैर्मितेब्दे श्रीवैक्रमे श्रावणमासि कृष्णे ।
पक्षेऽग्निमासे सुतिथौ च भूते स्वराज्यमासीत् सुखदं जनानाम् ॥१७

---

१ द्वितीयहेतुज्ञानार्थं 'पुरा यथा येभ्यः' इति पूर्वश्लोको द्रष्टव्यः

अभून् महानन्दसुधाब्धिरिङ्गत्तरङ्गमालाकुलितं जनानाम् ।
मनःप्रसादोल्लसितप्रमोदधारा समस्मिन्नपि भारतेऽस्मिन् ॥१८

यथा प्रचण्डातपतापितानां छायासु शीतैः सलिलैः सुगन्धैः ।
स्नातस्य पुंसो मनसः प्रसादस्तथाभवद् भारतवासिपुंसाम् ॥१९

वृद्धा युवानः शिशवस्तदानीं स्त्रीणां गणाः कर्मकराः समस्ताः ।
विद्यार्थिनश्चापि परप्रमोदपीयूषवारांनिधिमग्नचित्ताः ॥२०

जाताः स्वतन्त्रा वयमद्य लोके सम्यग् विमुक्ताः परतन्त्रतायाः ।
सर्वेषु देशेषु समानता स्यादस्माकमप्याहितगौरवाणाम् ॥२१

लोके यदर्थं भवति प्रकामं सम्वर्तलीलां विदधत् समीकम् ।
यस्मिन् हतानेकसुवीरदेहजातास्रधारा महती नदीव ॥२२

शस्त्रप्रयोगैर्नवरम्यहर्म्यव्रातः समं सर्वधनैर्निकामम् ।
यत्प्राप्तिहेतोर्बहुशः प्रजानां विध्वंसितोऽरण्यमिवास्ति दग्धम् ॥२३

अथ स्वराज्यं जनतौघहिंसामहोग्ररूपं समरं विनैव ।
स्नेहानुवृत्त्या परया च मैत्र्या तद् भारतीयेषु नृपेण दत्तम् ॥२४

अचिन्त्यशक्तिर्हि महात्मनोऽस्य महन्महिम्नः फलमद्वितीयम् ।
लोकोत्तरश्चापरिमेयरूपं नासम्भवद् वस्तु कदाचिदस्य ॥२५

यथा ग्रहीतुश्चिरकांक्षितं तत् स्वराज्यमासीदतुलप्रमोदम् ।
तथा प्रदातुः प्रतिदानबुद्ध्या न्यासस्त्वितीत्थं मनसः सुतोषः ॥२६

त्रिधा विभक्तेऽप्यथ भारतेऽस्मिन् सौहार्दमासीत् परमं नराणाम् ।
परस्परं प्रेमरसाभिवृद्धिर्बन्धुत्वभावेन पुरस्कृता सा ॥२७

एवं हि शान्ते विषयद्वयेऽपि वैराग्निवीजं समभूत् कुतश्चित् ।
तदैव गान्धेर्महिमाम्बुवृष्ट्या निर्वापितः शान्तिमगात् द्रुतं तत् ॥२८

कस्मिन्नपि प्राणिनि भेदबुद्धिर्न वा कदाचिच्च विमाननास्य ।
सपश्यतो लोकमिमं समस्तं समप्रवृत्तेः स्वमिवानुकालम् ॥२९

हिन्दुर्यथास्ते यवनोऽपि तद्वत् ख्रीष्टानुयायी च जनोऽपरोऽपि ।
तुल्योऽस्य दृष्टौ न भिदालवोऽपि समप्रवृत्तेर्विषमा न बुद्धिः ॥३०

सुपण्डिते मूढतमे महीशे सुदुर्विधे ज्ञानिनि तस्करे वा ।
प्राणित्वबुद्ध्या विषमा न दृष्टिर्महात्मनस्तस्य विशुद्धवृत्तेः ॥३१

लोकोपकारेण सहैव सत्यमहिंसया सम्वलितं तदीयम् ।
सुजीवितं सर्वजनोपयोग वपुः क्षमाधाम पर प्रशस्तम् ॥३२

यथा रविः सन्तमसं विनाश्य करैरशेषैः कुरुते प्रकाशम् ।
तथा महात्मा वचनैर्जनानामज्ञानमाच्छिद्य धियं प्रदत्ते ॥३३

एवं महाज्ञाननिधिस्तपस्वी साक्षाद् विभूतिः परमेश्वरस्य ।
सुखेन तद् भारतवासिपुंसां प्रादापयन् मोदकवत् स्वराज्यम् ॥३४

पुरा यदर्थं वहवः स्वदेशभक्ता महान्तः कृतिनो वलिष्ठाः ।
विहन्यमानाः सखिभिः सहैव प्राणान्प्रियान् स्वान् विजहुः सुखेन ॥३५

सहस्रशोऽब्दैः परतन्त्रताया वभूव राज्यं ननु भारतेऽस्मिन् ।
स्वतन्त्रतोच्चारणतोऽपि यस्मिन् महापराधः परिगण्यतेस्म ॥३६

यानीह रत्नानि महीशवृन्दै रत्नाकराद्वापि गिरिव्रजेभ्यः ।
पूर्वैः समानीय परैः प्रयत्नैः सर्वाणि सम्यक् परिरक्षितानि ॥३७

येषाञ्च साम्यञ्च जगन्त्रयेऽस्मिन् श्रुतं न दृष्टञ्च कुतोऽपि कैश्चित् ।
सुदुर्लभैर्यैरथ भारतन्नो रत्नाकरेति व्यपदेशमाप ॥३८

कुप्यैरकुप्यैः सहितानि दिव्यान्यपाहरन् तानि बलेन भूपाः ।
वैदेशिकाश्चोष्ट्रशतैरनैषुः स्वनीवृतं स्वैरितया सहैव ॥३९

परश्शताब्दैः शिरसि स्थितं तदाच्छिद्य पाशं परतन्त्रतायाः ।
गान्धिर्महात्मा स्वतपोमहिम्ना प्रादात् स्वराज्यं निखिलाङ्गपूर्णम्॥४०

न यत्र जन्यं न च रक्तपातो न वैरभावो विषयद्वयेऽपि ।
प्रवर्द्धते प्रत्युत नित्यमेव सद्भावना प्रेममयी समन्तात् ॥४१

इत्थं त्रिलोक्यां न कदापि दृष्टं न वा श्रुतं साम्प्रतमीक्ष्यतेऽपि ।
धनैश्च सैन्यैः सह कोऽपि भूपो राज्यं प्रदद्यात् समरं विनैव ॥४२

चराचरं यद् भृकुटीविलासात् सद्यः समुत्पद्यत एव भूयः ।
निर्लक्षणं तत्र विलीयतेऽम्भस्यम्भोवदस्मिन् स्थितिमद्विभाति ॥४३

तस्याप्रमेयस्य विभोरचिन्त्यशक्तेर्महात्मावतरोऽशभूतः ।
ततोऽप्रतर्क्येण विलक्षणेन कार्यं महिम्नाऽकुरुताद्भुतं सः ॥४४

सत्यप्रियो धर्मवपुर्महात्मा कर्मानुषक्तो धृतिमान् तपस्वी ।
भूतेषु सर्वेषु समानुरागो लोकोपकारव्रतवान्मनस्वी ॥४५

त्यागैकमूर्तिर्जितषट्सपत्नः परं महाज्ञाननिधिर्निरीहः ।
निराश्रयाणां परमाश्रयोऽयं सुकल्पवृक्षः परमार्त्तिभाजाम् ॥४६

यस्यास्ति धर्मः परमस्त्वहिंसा कर्मापि सेवैव समस्तजन्तोः ।
कामस्तु विश्वस्य शिवाय शब्दः सत्याय भूतेषु समा च दृष्टिः ॥४७

स्वस्यैव सेवाभिरतस्य हेतोस्ततोऽन्त्यजत्वव्यपदेशभाजः ।
तस्यान्त्यवर्णस्य हरेर्जनेति संज्ञां विशुद्धां कृतवान्महात्मा ॥४८

सुदुर्लभैर्मर्त्यगणेषु दिव्यैर्गुणैरमीभिर्निरवद्यरूपैः ।
व्याप्त्या च सर्वत्र निजात्मनोऽस्य नारायणीयांशकलेति तथ्यम् ॥

विश्वस्य सर्वस्य शिवं विधातुं विशुद्धधाम्नोऽवतरोऽयमीशः ।
ततस्तदीयापरिमेयशक्तिः स्वागाधगाम्भीर्यतया प्रशस्तः ॥५०

इत्थं स्वशक्त्या परया स्वतन्त्रं तपस्विवर्य्यो महनीयकीर्तिः ।
विधाय तद्भारतवर्षमेतद् व्यचिन्तयद् रक्षणमस्य योग्यम् ॥५१

रत्न यथा दुर्लभमेव पूर्वं प्राप्तस्य रक्षा कठिना ततोऽपि ।
तथा स्वराज्यं दुरवापमेतत् रक्षास्य गुर्वीति विभावनीयम् ॥५२

स्वल्पात् प्रमादादपि तत् करस्थं वालाञ्जलिस्थाम्बुवदाशु नश्येत् ।
ततो यथाऽयं फलपुष्पशाली स्वराज्यवृक्षोऽपि तथाभिरक्ष्यः ॥५३

अन्योन्य वैमत्यमहान्धकारं विवेकदीपप्रभया निरास्य ।
प्राप्यैकमत्य परया सुबुद्ध्या राष्ट्रं निजं गौरवमापनीयम् ॥५४

समेषु भूतेषु समानभावैर्भाव्यं जनैः सर्वत एव सर्वैः ।
एवं कृते प्रीयत एव सर्वाध्यक्षो हरिस्तेन शिवं नराणाम् ॥५५

अस्यां त्रिलोक्यामखिलोऽपि देही समीहते स्व सुखमेव नित्यम् ।
सत्यव्रतोपासनयास्य सद्यः प्राप्तिस्त्वहिंसार्चितया नितान्तम् ॥५६

विनेश्वरं कः प्रभवेत् विधातुं सृष्टिं समस्तां मनसोप्यगम्याम् ।
स्थूलातिसूक्ष्माखिलदेहिदेहामचिन्त्यरूपां रचनाविचित्राम् ॥५७

यदीयरोम्णां विवरेष्वनन्तंत ब्रह्माण्डमस्तीति सदागमोक्तिः ।
सोऽचिन्त्यशक्तिर्जगतामधीशः सत्यं परात्मा करुणानिकेतः ॥५८

सत्यस्थितेः स्यान् मनसः प्रसादः प्रमोदपीयूषरसाभिवर्षी ।
तिरस्कृताशेषसुखप्रवाहः कारुण्य गाम्भीर्यविवेकमूलः ॥५९

सत्यं शरद्वीतकलङ्कचन्द्रः पवित्रताया परमं पवित्रम् ।
तीर्थोत्तमं सद्भिरुपास्यमानं परं तपः तत् परमश्च धर्मः ॥६०

सत्ये स्थितोर्वी वनशैलनानासरित्समुद्रैः सहितान्तरीक्षे ।
निराश्रयास्ते हि खगाः समस्ताः सत्यप्रतिष्ठाः परितो भ्रमन्ति ॥६१

परस्पराकर्षणतो ग्रहाणां भूमिस्थितिश्चेति मतं न रम्यम् ।
स्वयं नु शक्तेः कथमुद्भवः स्यात् परस्पराकर्षणकारणीया ॥६२

अतो हि सत्यात्मकमस्ति विश्वमुपासनेनास्य सुदिव्यदृष्टिः ।
सुजन्मनां स्यात् परमार्थसिद्धिश्चान्ते च मोक्षस्त्वपुनर्भवाय ॥६३

इत्थं महात्मा परमार्थभूतं श्रेयस्करं लोकहिताय मार्गम् ।
समादिशत् येन पुरातनं तत् स्वगौरवं भारतमाशु यायात् ॥६४

गुणैः प्रकृत्या त्रिभिरेव सृष्टं जगच्च तद्रक्षणमप्यमीभिः ।
भवेदितीत्थं स विचार्य गान्धिस्त्रीनेव योग्यान् पुरुषानमंस्त ॥६५

यो राजनीतौ परमः प्रवीणः कीर्तिव्रजैर्यस्य समस्तविश्वम् ।
सितीकृतं भाति दिवेव नक्तं सत्यप्रियो यश्च यथोक्तकारी ॥६६

सरस्वती यस्य मुखाम्बुजन्म समाश्रयन्ती प्रतिभां विधत्ते ।
लोकोत्तरामाहितलक्षणो यः वीराग्रणीर्वीतभयः समन्तात् ॥६७

विपक्षपक्षीयजनापहारात् लोकस्य सर्वस्य सुलालनाच्च ।
लालोत्तरं नाम जवाहरेति प्रामोदहष्टान्नु यथार्थभूतम् ॥६८

प्रधानमन्त्रित्वपदस्य योग्यः सर्वात्मनाथ मम भाति बुद्धौ ।
अधिष्ठितं स्यादमुना पदं तद् सुपूजिते गौरवमाशु यायात् ॥६९

शक्तो यमर्थं भुवि यो विधातुं कार्य्यं च तद् तत्र समर्पणीयम् ।
अक्षेषु यद्ग्राहकमेव यस्य तद्ग्राह्यबोधः समुदेति तेन ॥७०

यो वल्लभः सर्व जनस्य नित्य मनीषिणां मान्यतमः सुधीशः ।
महामतिर्नीतिविदाम्वरिष्ठो मित्रे रिपौ वा समदृष्टिपातः ॥७१

पापाद् विना यस्य न भीःकुतश्चित् चित्तेऽस्ति सा चापि बिभेति यस्मात् ।
यः पूरुषो लौहमयो जगत्यां ख्यातः सदा हीनजनानुकम्पी ॥७२

परोपकारैकमतिः सवीरः क्रियास्वभिज्ञो निखिलासु धीरः ।
योग्यः स मन्त्री भवितुं गृहस्य रक्षाविभागस्य च लोकसौम्यः ॥७३

महामना यः परमस्तपस्वी सद्ज्ञानपाथोनिधिरद्वितीयः ।
अगाधगाम्भीर्यमहासमुद्रो विवेकविज्ञानमयः प्रदीपः ॥७४

यस्मिन् स्वकीयत्व परत्वभेदो न विद्यते यो वसुधैकबन्धुः ।
सत्यैकनिष्ठः क्रियया च वाचा हृदाप्यहिंसाव्रतमेव धत्ते ॥७५

यो लोकसेवाव्रतिनां वरिष्ठः पूतैः स्वकीयैश्चरितैर्नितान्तम् ।
सुशिक्षयन् सर्वजनान् मनीषी मान्यः सतां मानयिताऽऽदरेण ॥७६

यो नीतिशास्त्रार्णवपारगामी वेदार्थदर्शी परिणामबुद्धिः ।
यस्मिन् भृशं तुष्यति मेऽपि चेतः शान्तात्मनां यो वशिनामधीशः ॥७७

सोऽन्वर्थराजेन्द्रप्रसादनामा भवेत् स्वतन्त्रस्य हि भारतस्य ।
श्लाघ्यैर्गुणैः स्वैः प्रथमः प्रतीतो लोकार्चितो राष्ट्रपतिः सुयोग्यः॥
अय्यानया स्यादिह भारते तत् श्रीरामराज्यं चिरकांक्षितं नः ।
येनाशु भूयः पदवीं स्वकीयां लभेत तां भारतवर्षमेतत् ॥७९
एभिस्त्रिकैर्भारतवैजयन्ती जनैरशेषैर्महतीं प्रतिष्ठाम् ।
सुपूज्यमाना पुनरेतु भव्यां चिरन्तनीं स्वां जगतीप्रसिद्धाम् ॥८०
इत्थं विमृश्याथ महाविभूतिर्हरेर्महात्मा महनीयकीर्तिः ।
तथा व्यवस्थापयदाशु विश्वकल्याणकामोऽखिललोकबन्धुः ॥८१
दुर्भेद्यैः परतन्त्रतासुनिगडैर्बद्धं चिराद् यद्दृढम् ।
क्रन्दद् दुर्विधलोक संकुलमभूद् यस्मात् पशुत्वं भृशम् ॥
रम्यं भारतवर्षमेतदखिलं स्वातन्त्र्यमाप्येप्सितम् ।
स्थेयानस्य परप्रमोदबहुलः सूर्योदयो जायताम् ॥८२

इति श्रीसाधुशरणशर्म्मविरचिते
श्रीमद्गान्धिचरित महाकाव्ये
षोडशः सर्गः समाप्तः

# श्रीगान्धिचरितम्

## [ सप्तदशः सर्गः ]

व्यगमदथ निशा सा ध्यायतो विश्वशान्तिम्
निखिलभुवनबन्धोर्गान्धिनो विश्वमूर्त्तेः ।
तिमिरकरिमृगेन्द्रोऽनूरुरैन्द्री दिगास्यम्
नवकरनिकरैस्तद् द्योतयन् पूर्वमागात् ॥१

तरणिकिरणजालैरुद्गतैर्व्याप्तमेतद्
विरलशिथिलभाभिस्तारकाभिर्विशिष्टम् ।
वियदिव सितपुष्पैरर्चितं तद्द्वयराजद्
विशदकपिशवर्णं क्वापि हेमोज्ज्वलाभम् ॥२

द्युमणिनवमयूखैः रञ्जितास्या दिगैन्द्री
व्रजति शशिनि चास्तं वल्लभे वारुणी सा ।
भवति कपिलवर्णा जातरोषेव सद्यो
द्वयमिदमथ जातं ह्येकरूपं तदानीम् ॥३

नभसि नवमयूखैर्लोहिते भास्करीयैः
सह सघनतमोभिर्भीतयस्त्यक्तलोकाः ।
अतिनिविडविशुष्यद्वेणुगुच्छाश्रयांस्तान्
समगुरथ दिवान्धान् घूत्कृतैर्लक्ष्यमाणान् ॥४

निखिलभुवनचक्षुर्मण्डले तप्तहेम-
द्युतिमुषि करजालैरञ्जिते चारुशृंगम् ।
गतवति कनकाद्रेराशु विश्वं समस्तम्
विकसति सह पद्मैश्चेष्टते स्वक्रियायाम् ॥५

स्फुटितनवसरोजैरञ्जलिस्थैर्मुनीनाम्
सुरसरिदमलाम्भःपूरितैः चन्दनाढ्यैः ।
सुरभिकुसुममिश्रैरर्घ्यदानैः सुभक्त्या
स जयति हरिदश्वः पूजितो व्योमदीपः ॥६

उडुगणरजनीशैरन्विताया शवर्य्याम्
अभवदतिविमुग्धो भीतिमांश्चैष लोकः ।
तरणिकिरणवृन्दैरर्चिते त्वन्तरिक्षे
विशति हृदि विवेको जन्मिनाञ्चाभयत्वम् ॥७

द्रुतकनकरसाभैर्भास्वतस्तैर्मयूखैः
निविडकृतविलेपं स्वर्णवद्भाति विश्वम् ।
निजनिजपरिचर्याव्यापृतः प्राणिवर्गो
भवति विशदकान्तिर्भावनाभावितश्रीः ॥८

निखिलनिशिवियोगोद्भूतशोकाभिभूतं
प्रबलविरहवह्निज्वालया तप्यमानम् ।
व्यथितमिव दिनेशस्योदयं याचमानम्
तरणिरुदयमागात् हर्षयन् कोकयुग्मम् ॥९

जगदिदमखिलं यन्नक्तमासीन् महान्धं
सुभटजनमनःसू दूभावयद्वापि भीतिम् ।
तदिह सपदि सूर्यस्योदयेऽमन्दहर्षं
भवति शिशुगमार्हं निर्भयं चापि दुर्गम् ॥१०

सरसि कुवलयानामाकरे सारसीयः
श्रुतिसुखदनिनादोऽमन्दहर्षात् प्रनृत्यन् ।
सरसिजवनलक्ष्म्याः शिञ्जितस्यानुकारी
भवति सह शकुन्तामोदरावैः समन्तात् ॥११

नरपतिरिव सूर्यो दीधितिः तस्य सैनाः
हरितहययुतोऽयं स्यन्दनो ह्येकचक्रः ।
तरुणतिमिरवर्गं शत्रुमुत्पाद्य धीरोः
नभसि समरभूमौ राजते निस्सपत्नः ॥१२

निखिलसुरगणानामस्ति मध्येन कश्चिद्
यदुदयसमकाल विश्वमेतत् समन्तात् ।
स्फुटितमिव सरोजं शोभतेऽप्यस्तभावे
मुकुलितमिव सद्यो जायते निष्प्रभं तत् ॥१३

समदमधुपवृन्दैर्भिद्यमानं सरोजं
दिनकरकरजालैः स्पृष्टमालोक्य मुग्धैः ।
श्रुतिसुखदनिनादैरर्च्यते गन्धलुब्धैः
सुभगनवसुवर्णाम्भोजबुद्ध्या भ्रमद्भिः ॥१४

निशि विघटितचक्रद्वन्द्वमानन्दयं स्तत्
कुवलयवनशोभामद्वियीयां प्रकुर्वन् ।
भुवनमिदमशेषं बोधयन् स्वैर्मयूखैः
तिमिरनिकरमाशूत्सारयन् भानुरागात् ॥१५

विशदकनकमूर्तिः स्यन्दनश्चैकचक्रः
शुकछविहरिदश्वाः सप्त सूतोऽप्यनूरुः ।
द्युतिरपि च सुदिव्या सर्व लोकोत्तरासौ
भवति खलु विचित्रं सर्वमेवास्य भानोः ॥१६

क्वचिदलिकुल गानं मानसाह्लादकारि
स्फुटितनवसरोजः क्वापि पद्माकरोऽयम् ।
परभृतकलनादः प्रीतकोकप्रियोक्तिः
कुहचिदपि समीरो मन्दमन्दं प्रयाति ॥१७

कलितकनकरश्मिस्रग्विराजच्छुभाङ्गो
वलयितकरवृन्दैर्दुर्निरीक्ष्यैर्वृतास्यः ।
धृतललितसरोजः स्यन्दनं चाधिरूढः
स्फुरदमलसुरौक्मं व्योम्नि भानुर्विभाति ॥१८

ऋषिगणसुरसंघाभ्यर्च्यमानैः सुभक्त्या
सततमभिमुखस्थैर्वालखिल्यैर्निरीहैः ।
श्रुतिभिरमलवाग्भिः स्तूयमानो जवाढ्यैः
व्रजति मुदितलोको द्योतयन् खं विवस्वान् ॥१९

युगपदुदयमागाद् भानुमान् व्योमदीपो
निजकिरणसमूहैर्भासयन् सर्वविश्वम् ।
सपदि धृतजयश्रीर्भारतस्यामितौजाः
मुदितनिखिललोको भाग्यसूर्योदयोऽभूत् ॥२०

स्फुरदमलकरौघैर्नाशयित्वान्धकारम्
विपुलभयमुदग्रं जीवयन् जीवलोकम् ।
त्रिदशमनुजदैत्यैर्वन्द्यमानस्सुभक्त्या
जयति परमदेवो लोकचक्षुर्विवस्वान् ॥२१

इह भवति यदीयास्तोदयाभ्यामखण्डे
जगति दिवसरात्र्योः सुव्यवस्था च काले ।
सुकलिततिथिमासाब्दादिरूपो विभागो
वियति भुवनदीपो राजते सोंऽशुमाली ॥२२

सलिलमयसुधांशौ प्राप्तसंक्रान्तिरंशु-
र्भवति विशदकान्त्या चन्द्रविम्बं यदीयः ।
सकलजगदमन्दानन्ददं स ग्रहेशः
प्रभवतु महते न. श्रेयसे सुप्रसन्नः ॥२३

जनयति निखिलं यो विश्वमेतत् स्वधाम्ना
सततमवति सर्वापत्तिसंघात् पुनस्तत् ।
कलयति च निजानां तेजसामीश्वरोऽयं
दिशतु किरणमाली भारतस्योदय नः ॥२४

इति नभसि विराजन्मण्डलं भास्वतीयम्
कलितकिरणजालं प्रेक्ष्य गान्धिर्महात्मा ।
विहितनिखिलकृत्यो यस्य हेतोरिहागात्
परमिममुपदेशं दातुमैच्छन् महात्मा ॥२५

भुवि निखिलनराणामापदां राशिमुग्रं
दहति ननु हुताशस्तूलवद् यश्च सद्यः ।
तमथ सदुपदेशं कर्तुमिच्छोस्तु गान्धे-
र्हृदि सपदि समागाद् राजधानी प्रशस्ता ॥२६

वहति सलिलधारा यत्र निर्भिद्य रंध्रं
विपुलतरसुयत्नस्तस्य तत्रैव कार्यः ॥
प्रसरति जनतानां शासन स्थानतोऽस्मात्
तदिह भवतु भव्यो मामकश्चोपदेशः ॥२७

सुकलितमतिरेवं दिव्यदृष्टिर्महात्मा
निखिलजनहितार्थं रामराज्यं सुराज्यम् ।
सपदि समभिलष्यद् येन यायात् सुपूज्यम्
जगति खलु पुनस्तद् भारतं स्वं गुरुत्वम् ॥२८

तदिह सुनयमार्गः सर्वथालम्बनीयः
क्वचिदपि न कदाचिद् वर्गभेदो विधेयः ।
स च भवति गुणानां कर्मणां वापि हेतोः
परमसुखदराज्यं श्रेयसे भूयसे स्यात् ॥२९

प्रकृतिगणसुरक्षा न्यायतो योग्यदीक्षा
प्रभवति न कदाचित् क्वापि भीतिः कुतश्चित् ।
हृदयमपि जनानां यत्र निश्चिन्तमास्ते
भवति तदिह राज्यं रामराज्य सुखार्थम् ॥२०

जगति खलु परार्था वृत्तयः सन्ति येषां
तरुगणतटिनीवत् ते जनाः स्युर्महान्तः ।
प्रथितसुयशसां तद् जीवनं साधु पुसाम्
सकलजनहितार्थं नात्मनोऽर्थे कदाचित् ॥२१

गतवति परवत्त्वे देहभाजां समेषाम्
भवति खलु समानः सर्वकृत्येधिकारः ।
क्वचिदथ न विधेयः कस्यचित् धर्मरोधो
जनयति न विरोधं क्वापि धर्मान्तरे चेत् ॥२२

वहिरपि निजभासा भासयन्नन्धकारं
तलगतमथ दीपो हन्तुमीशो न दृष्टः ।
कति जगति नरास्ते ये स्वकीयांश्च दोषान्
सकलजनसमक्ष दर्शयेयुः प्रसन्नाः ॥२३

त्रिगुणविरचितेयं सृष्टिरत्र त्रयाणाम्
विकृतिरथ गुणानां विद्यते स्वानुरूपा ।
विहितपरमयत्नैः सात्त्विकैर्देहवद्भि-
र्वचनहृदयकायैर्भाव्यमेतैर्नितान्तम् ॥२४

ततो जनानां मनसि प्रसन्ने विवेकबुद्धिः समुदेति भव्या ।
यया त्रिलोकीमपि साधवस्ते कुर्वन्ति सर्वां वशगामुदाराः ॥३५

ततस्तु सत्ये परिनिष्ठितास्ते सर्वत्र सर्वात्मकभावशुद्धाः ।
ममानुरागा जनतासु नित्यमानन्दपीयूषरसाभितृप्ताः ॥३६

ततस्सुधीभिः सततं विवेकप्रदीपघातं मनसि प्रवृद्धम् ।
रजस्तमः सुप्रसरं निगृह्य सत्वं विशुद्धं हृदि चिन्तनीयम् ॥३७

रजःप्रवृत्तौ च तमोभिवृद्धौ स्वेच्छाविघाताद् भवति प्रकोपः ।
निजेप्सितस्य प्रतिकूलतश्च सत्त्वात्मता वह्निपयःप्रवाहः ॥३८

सर्वेन्द्रियद्वारमसौ पिधाय महान्धतां सन्तनुते नराणाम् ।
यया न किं कार्यमकार्यमेते पश्यन्ति ते साहसिका नितान्तम् ॥३९

सद्भावनारण्यहुताशनोऽयं द्वारश्च पुसां निरयस्य मुक्तम् ।
ताभ्यां भवन्नुग्रतरः प्रकोपो दिवापि लोकं कुरुते महान्धम् ॥४०

यथेन्धनौघं हुतभुक् प्रदीप्तो ज्वालावलीढं कुरुते विशुष्कम् ।
क्षणेन तद्वत् हृदिजः प्रकोपः सर्वं विवेकं दहतीह पुसाम् ॥४१

चक्षुर्विहीनो न च कश्चिदन्धः स्वपाणिपादेन विवेकबुद्ध्या ।
सर्वं स्वकीयं कुरुते च कार्यं न वा कुतश्चित् पततीह लोके ॥४२

द्यूतासवस्त्रीनिरता स्तदर्थं वसून्यसूश्चापि हरन्ति पुंसाम् ।
तमस्विनश्चोग्रतरस्वभावा निष्कारणं वैरधियो भवन्ति ॥४३

सौजन्यराजीवतुषारपातः कामः सदाचारतरोः कुठारः ।
दुष्पूरणो वा तितउः पयोभिर्निषेव्यमाणो विषयोपभोगैः ॥४४

शरीरशक्तिं परितः क्षिणोति धर्मं परित्याजयति प्रकामम् ।
स्वां संस्कृतिं नाशयते जनानां प्रायः सदा मानवतापहारी ॥४५

लोभात्मनां नास्ति कदापि सत्ये स्थितिर्न सौहार्दमतिः सुहृत्सु ।
ये काकिणीमात्रकृतेऽपि सद्यः स्नेहं विमुञ्चन्ति चिरात्प्ररूढम् ॥४६

ताते जनन्यां तनयेऽपि बन्धौ मित्रे च ते निष्करुणा भवन्ति ।
द्यूतासवस्त्रीनिरता स्तदर्थं वसून्यसूञ्चापि हरन्ति पुंसाम् ॥४७

ताते गुरौ मातरि वापि पुत्रे मित्रे च पत्न्यां स्वजने च भूम्ना ।
विशङ्किता न प्रतियन्ति जातु स्वार्थान्धतादुग्रहनिग्रहीताः ॥४८

इयं त्रयी धर्मतरोरसाध्यो व्याधिः सदाचारवनीकृशानुः ।
द्वारं प्रशस्तं नरकस्य तस्मात् त्याज्या इमे दूरत एव लोकैः ॥४९

त्रय्यानया ते कलहायमाना निरागसो घ्नन्ति जनान् प्रमत्ताः ।
क्वचिच्च तैरप्यभिहन्यमाना कर्मानुरूपां गतिमालभन्ते ॥५०

भूतेष्वहिंसाव्रतिनोऽखिलस्य सत्यात्मनो नाम नरस्य बुद्धौ ।
विवेक उत्पद्यत आशु शुद्धः स्यात्सार्थकं येन जनुर्जनानाम् ॥५१

कामादयः षड् रिपवः शरीरभाजामजेयाः सुतरां प्रदिष्टाः ।
स्थानेषु तेषाञ्च शमादयस्ते षडेव योज्या मनुजैः सुधीभिः ॥५२

समस्तलोकेषु समप्रवृत्त्या रागापरागौ परिवर्जयद्भिः ।
कृतव्यवस्थं प्रकृतिष्वधीशैः राज्यं भवेत् तत् सुखदं नराणाम् ॥५३

साम्नैव लोकै रिपवो विजेया दानेन च क्वापि न युद्धवृत्त्या ।
मैत्री परेष्वप्यनुवर्तयद्भिः स्वराज्यरक्षां प्रति सावधानैः ॥५४

सत्यं त्वहिंसा परमोस्ति धर्मः स्वयं न हिंस्यात् प्रतिहिंसको वा ।
सत्त्वांस्तु हिंसाभिरुचीन् जिघांसून् वीक्ष्यात्मरक्षां क्षमया विदध्यात् ॥५५

पुंसां क्षमा नाम महास्त्रमुक्तम् शान्तात्मनां शेवधिरक्षयिष्णुः ।
तपः पवित्रं च तपस्विनां सा मोक्षार्थिनां मोक्षपथं सुदिव्यम् ॥५६

चौर्यानृतोत्पीडनदुर्विधत्वद्यूतासवैर्गर्हितकर्मभिश्चेत् ।
विवर्जितं भारतवर्षमेतत् भूयो भवेत् सर्वसमृद्धिपूर्णम् ॥५७

इति निखिलजनानां श्रेयसेऽसौ महात्मा
शिवममुमुपदेशं दत्तवान् हेतुगर्भैः ।
अमृतमयवचोभिः सूनृतैः सारभूतैः
तम इव मतिभेदं नाशयन्भाभिरर्कः ॥५८

स्वच्छाच्छोच्छलदम्बुवारिधिमहारिंगत्तरंगोपमम्
स्वातन्त्र्याधिगमोद्भवातुलपरानन्दोर्मिमालाकुलम् ।
सर्वत्राभ्रलिहोच्छ्रितध्वजमभूद् गान्धेर्यशोमण्डितम्
भव्य भारतवर्षमेतदधुना सर्वातिगं राजते ॥५९

इति श्रीमद्गान्धिचरितमहाकाव्ये
साधुशरणशर्म्मविरचिते
सप्तदशः सर्गः समाप्तः ।

# श्रीगान्धिचरितम्

## ॥ अथ अष्टादशः सर्गः ॥

अथेदं भारत वर्षं पद्माकरमिवोल्लसत् ।
हरिदश्वो महातेजा महात्मा द्योतयत् तदा ॥१

भानोरिवाम्बर धाम्ना गान्धेरतुलतेजसः ।
व्यराजद् भारतं वर्षं स्फुरदिन्दीवरोपमम् ॥२

प्रतिपक्षगणाः सर्वे गान्धिसूर्यागमेक्षणात् ।
ताराग्रहा इव क्वापि सद्योऽदर्शनतां गताः ॥३

विपक्षपक्षाश्रयिणो दिवान्धा इव सत्वरम् ।
कन्दरामाश्रयन्केचित् महात्मार्कोदये क्वचित् ॥४

या च भारतसौभाग्यपद्मिनीगेऽस्तगे पुरा ।
आसीत् विकसितामन्दस्मितशोभिशुभानना ॥५

सैयं कुमुद्वती जाता लज्जानम्रमुखी भृशम् ।
गान्धिसूर्योदये त्वस्मिन् महसाक्रान्तभूतले ॥६

शरत्पूर्णेन्दुवदनो जगदाह्लादकः शुचिः ।
वाचा मधुरया सर्वान् लोकान् स समतूतुषत् ॥७

समुद्र इव सर्वासामापगानां गमोऽनिशम् ।
अव्याहतोऽस्मिन् सर्वेषां लोकानामभिनन्दितः ॥८

जनान् सम्भावयन् प्रेम्णा पृष्टश्चोत्तरयन्मुदा ।
परमानन्ददः पुंसामात्मेव प्रेष्ठतां गतः ॥९

नाकृत्या न धनेनास्य विद्ययापि न वा क्वचित् ।
पक्षपातोऽभवत्तस्य सर्वत्र समदर्शिनः ॥१०

जिघांसोरपि कल्याणं कुरुते स महाव्रतः ।
न तस्य मित्रं नामित्रं लोकानां सुहृदः प्रभोः ॥११

पञ्चभूतात्मकत्वं तद् देहस्यापीति निश्चितम् ।
तथात्वे तद्विकाराणां तस्मिन्नावश्यकी स्थितिः ॥१२

किन्तु कामादिवर्गाणां षण्णां वृत्तिस्तु सात्त्विकी ।
स्थितास्मिन् लोकरक्षायै तत्फल साधु दृश्यते ॥१३

तत्तत्स्थानेषु वा षट् स्युर्योजितास्ते शमादयः ।
स्वस्वानुरूपकार्याणि जनयन्ति नियन्त्रिताः ॥१४

तपसा च यमेनास्य संयमेन तपस्विनः ।
शुद्धान्तश्चेष्टितं कार्यमिन्द्रियेषु विलोक्यते ॥१५

नायं प्रयत्नतः प्राप्तैस्तपोभिः संयमादिभिः ।
लब्धात्मबोधः संजातः किन्त्वेतैः सहजैर्मुनिः ॥१६

अहिंसाज्ञानवैराग्यक्षमासत्यव्रतात्मता ।
विश्वोपकृतिसेवाद्या गुणास्तस्य निसर्गजाः ॥१७

अचिन्त्यरचना सृष्टिः प्रिया भगवतो हरेः ।
यद्रक्षार्थं बहून् क्लेशान् सहतेऽसौ निरन्तरम् ॥१८

गुणानुकूलां प्रकृतेर्ब्रह्मविष्णुशिवात्मिकाम् ।
कृत्वा मूर्तिं स कुरुते सर्गपालनसंहृतीः ॥१९

तां दिधारयिषुः स्वांशात् धर्मं समसृजत् प्रभुः ।
छद्याधारमिव स्तम्भं गेहस्य सुखदं नृणां ॥२०

तत्रान्तरायमुद्वीक्ष्य समुत्पन्न कृपानिधिः ।
धत्ते बहुविधा मूर्तीस्तिर्यग्देवनरादिषु ॥२१

हत्वा धर्मद्रुहः सर्वान् विश्वाधारं सनातनम् ।
लोकेषु धर्मं संस्थाप्य पुनर्याति स्वमालयम् ॥२२

एवं धर्मतरुं सिञ्चन् कृपासलिलधारया ।
सर्वोपद्रवतः सम्यक् तं रक्षति महेश्वरः ॥२३

मर्त्येषु दुर्लभैरेतैर्गुणैः शुद्धैर्महात्मनः ।
पूर्णस्य भगवद्दिव्यविभूतित्वं प्रतीयते ॥२४

आरभ्य जन्मतो यस्य विश्वकल्याणकारिता ।
सर्वेषु प्राणिवर्गेषु समत्वं निर्विशेषकम् ॥२५

नात्मीयो न परो यस्य कश्चिदस्ति जगत्त्रये ।
निराश्रयाणां दीनानां यस्मिन्नस्ति शरण्यता ॥२६

जिह्वां यस्य न वास्पृक्षत् मृषा जातु मनागपि ।
बालभावे न हास्ये च सततं सत्यवादिनः ॥२७

गंगाया इव लोकेषु स्वमायत्स्वखिलेषु च ।
न घृणा न विभेदो वा समदृष्टेर्महात्मनः ॥२८

पूयशोणितमध्यस्थकुष्ठव्रणविदूषितम् ।
नरं परिचरन् गान्धि भक्त्या प्रीतिमवाप्नुते ॥२९

अस्मिन् कामादिभावानां सर्वेषामस्ति वश्यता ।
निगृहीता व्रजन्तीमे वशिनस्तस्य चेष्टया ॥३०

समुद्र इव गम्भीरः पर्वतेन्द्र इव स्थिरः ।
मनीषी सत्त्वसम्पन्नो धृतिमान् करुणालयः ॥३१

धर्मेण धार्यते सर्वं ब्रह्माण्डं विविधं महत् ।
ततो वै धारणात् धर्म इत्याहुर्धर्मलक्षणम् ॥३२

तस्माद् विमुग्धबुद्धीनां दुराचारैः समन्ततः ।
धर्मं विहन्यमानं तं परमात्मा कृपार्णवः ॥३३

कलयांशेन वा साक्षान्मर्त्यलोकेऽभिजायते ।
धर्मोपरोधनाशार्थं लोकानां मङ्गलाय च ॥३४

तस्माद्धर्मतरुं शुष्कप्रायं वीक्ष्य दयानिधिः ।
तमुज्जीवयितुं भूमौ विभूतिं स्वकलात्मिकाम् ॥३५

मोहनं हि महात्मानं गान्धिं सौम्यगुणाकरम् ।
प्रैषयद् धर्मरक्षार्थं पृथिव्यां मानवर्षभम् ॥३६

चिराद् भारतवर्षस्य पारतन्त्र्योद्भवां भयम् ।
यातनां वीक्ष्य तत्रैव मेने स्वावतरं हितम् ॥३७

एकस्थानस्थितो दीपो यथा स्थानान्तरं त्विषा ।
तथोपदेशो विहितः सद्भिराप्नोति तेजसा ॥३८

एकत्रापि कृतं सद्भिः कार्यं दीप इव द्रुतम् ।
स्थानान्तरं समाप्नोति महिम्नेव त्विषाखिलम् ॥३९

अज्ञानादथवा मोहादालस्याच्च जनैः पुरा ।
यद्यदङ्गं तु धर्मस्य त्यक्त स तदुपादिशत् ॥४०

यमुद्दिश्य विधिं देवो गान्धिरागतवान् दिवः ।
सम्पाद्य सर्वं तं लोकं जिहासन्नमुमब्रवीत् ॥४१

धर्म एव सतां सेव्यश्चतुर्वर्गफलप्रदः ।
यस्मिन् सर्वमिदं विश्वं निहितं वर्तते सदा ॥४२

सेव्यमानो यथा वृक्षश्छायापुष्पफलादिभिः ।
सेवमानान् समं लोकानानन्दयति सर्वदा ॥४३

उपास्यमानो धर्मोऽयं तथा मर्त्यैरहर्निशम् ।
प्रीणयत्येव तान्काले तदभीष्टप्रदानतः ॥४४

धर्मः साक्षाद् हरेर्मूर्तिः सर्वव्यापी सनातनः ।
केवलेन तु शब्देन भिदा न क्रिययानयोः ॥४५

ततोऽसौ भगवान् धर्मो धत्तेऽसंख्यं प्रभोज्ज्वलम् ।
ब्रह्माण्डं पाति काले च संहरत्यपि तत्पुनः ॥४६

धर्म एव सखा पुंसां नान्ये ये बान्धवादयः ।
इहैव तेषां बन्धुत्वं क्षणिकं तद् विलोक्यते ॥ ४७

अवश्यंभाविभावस्तु परिहर्तुं न शक्यते ।
महिमासौ हि कालस्य जगत्कलयतोऽनशम् ॥४८

ततो जन्मवतां मृत्युर्मृतानां जन्म जायते ।
जन्ममृत्यू हि लोकानां भवतः सुव्यवस्थितौ ॥४९

तस्मात् शरीरमुत्सृज्य गच्छतां वन्धुभावनाम् ।
शरीरेण समं दग्ध्वा निवर्तन्ते कुटुम्बिनः ॥५०

धर्म एकः सतां वन्धुर्मरणेऽप्यनुयाति यः ।
ततो धर्मो न हातव्यो रक्षणीयश्च सर्वदा ॥५१

स्वयमुत्पद्यते सर्गो नास्य कर्त्तोपलभ्यते ।
इत्यनीश्वरवादस्य याथार्थ्य नैव वर्तते ॥५२

रजस्तमःस्वभावानां बुद्धिव्यामोहसम्भवः ।
न विचारसहो वादः कार्य्यकारणसङ्गतौ ॥५३

कार्यकारणभावस्तु सृष्टौ सर्वत्र सर्वदा ।
चक्षुर्गोचरतां प्राप्तस्तदभावे कथन्नु सा ॥५४

बीजाङ्कुरादिन्यायेन सर्वेभ्यः प्रागवस्थितिः ।
सूच्यते जगतः कर्तुर्महेशस्य प्रमाणतः ॥५५

बीजाभावेन वृक्षः स्याद् वृक्षाभावेन बीजता ।
तस्मादिहास्ति दोषोऽसावन्योन्याश्रयनामकः ॥५६

यदि सर्गोद्भवे हेतुर्नहि कश्चिदपेक्ष्यते ।
वाङ्मात्रमिदमेवेति मत्तप्रलपितं यथा ॥५७

व्यष्टौ हि कारणात् कार्यं जायमानं विलोक्यते ।
व्यष्टिरूपात् पृथक् रूपं समष्टेर्न हि विद्यते ॥५८

व्यष्टेर्यः समुदायस्तु समष्टिः सेति निर्णयः ।
ततो व्यष्टिगतं कार्यं समष्टेरेव सम्मतम् ।५९॥

कार्य्यकारणभावस्य नियतत्वान्न जायते ।
स्वतः सर्गो न पितरौ विना पुत्रोद्भवो यथा ॥६०॥

प्रकृतिः कुरुते सर्गं स्वभावो वेति नेश्वरः ।
केषाञ्चिन् मतमेतत् तु चिन्त्यमेव विभाति नः ॥६१॥

अचिन्त्यरचनात्वेन सृष्टेस्तत्कर्तुरिष्यते ।
सर्वज्ञापरिमेयत्वशक्तिता नास्ति सा तयो ॥६२॥

स्वभावप्रकृतिभ्याञ्चेत् प्रधानं परिगृह्यते ।
तस्याप्यचेतनत्वेन घटते नापि कर्तृता ॥६३॥

तयोर्धर्मितया धर्म्मी कश्चिदेवमपेक्ष्यते ।
प्रकृतिर्वा स्वभावो वा स्यातां कस्येति तावुभौ ॥६४॥

गुणसाम्यन्तु प्रकृतिरितिपक्षग्रहेऽप्यसौ ।
दोषः पूर्ववदेवैषा गुणसाम्यं न सा च ते ॥६५॥

पुरुषाध्यक्षतायान्तु कर्तृत्वं प्रकृतेर्मतम् ।
न स्वतन्त्रा जगत् स्रष्टुं विवशा साह्यचेतना ॥६६॥

तस्मादचिन्त्यमहिमा परमात्मा सनातनः ।
सृष्टिं करोति भूतानां पाति च ग्रसति स्वयम् ॥६७॥

सर्वाधारमिमं धर्मं यः कश्चित् सेवते जनः ।
सर्वथाभ्युदयस्तस्य न च किञ्चित् भयं भवेत् ।६८॥

आत्मनश्चापि लोकानां रक्षार्थं सततं नरः।
शुद्धेन मनसा नित्यं धर्मं सेवेत भक्तिमान् ॥६९॥

विविधान्यागमोक्तानि धर्माङ्गानि महर्षिभिः।
संगृहीतानि संक्षिप्य यानि वो वच्मि तान्यहम् ॥७०॥

सत्यं त्वहिंसंयोपेतं ब्रह्मचर्यमखण्डितम्।
सापरिग्रहमस्तेयमस्वादञ्चाभयं पुनः ॥७१॥

श्रमो विशुद्धः सर्वत्र धर्म्मेषु समदर्शिता।
विनयः स्वव्रतात्यागः प्रियसत्याभिभाषिता। ७२॥

शमो दमस्तितिक्षा च धृतिः शान्तिः क्षमापरा।
वैराग्य ज्ञानमास्तिक्यं भक्तिश्च परमेश्वरे ॥७३॥

हरिकथाचिन्तनं भक्त्या हरेर्नामानुकीर्तनम्।
इत्येष परमो धर्मः सुखसाध्यः सदा नरैः ॥७४॥

यद्बलेन वियद्व्राततेजोम्भःपृथिवीग्रहाः।
स्वस्वस्थाने स्थिताः सर्वे सत्यं तद् ब्रह्म शाश्वतम् ॥७५॥

कायेन मनसा वाचा सेवमानानहर्निशम्।
सर्वानर्थनिकरात् सम्यग् वारयत् तत् सुरक्षति ॥७६॥

सत्यं सेवयतां पुंसामनन्तज्योतिरुदेति यत्।
दर्शयेत् परमात्मानं हृदि स्थ नात्र संशयः ॥७७॥

हिंसा प्राणभृतां लोके बध एव न कथ्यते।
वाङ्मनःकर्ममिश्रापि जन्तुक्लेशाऽपि सा मता ॥७८॥

ब्रह्मचर्येण चापल्यं मनसोऽपैति सादरम् ।
निगृहीतानि सद्यः स्युः करणानि समन्ततः ॥७९॥

वपुषा चेतसा वाचा सेव्यमानं निरन्तरम् ।
ब्रह्मचर्यं त्रिधा प्रोक्तं परमं पावनं तपः ॥८०॥

स्वोपयोगाधिकानां यत् वस्तूनामति संग्रहः ।
परिग्रहोऽसौ विद्वद्भिः तत्त्वज्ञैः परिकीर्तितः ॥८१॥

असंविभज्य यः किंचित् स्वयं भुङ्क्ते स मानवः ।
परत्रेह समाप्नोति महतीं गर्हणीयताम् ॥८२॥

स्वोपभोगातिरिक्तानामर्थानां परिरक्षणम् ।
महते पातकाय स्यात् परेषां स्वापहारतः ॥८३॥

यदर्थं सततं पुंसां क्लिश्यतां क्षुधितात्मनाम् ।
तदुच्छिद्य बलात् धत्ते स वै नरपशुर्महान् ॥८४॥

स्वोपयोगाधिको नास्ति पशूनामपि कुत्रचित् ।
संग्रहो भोज्यवस्त्वादौ मनुजेष्वेव दृश्यते ॥८५॥

विनाज्ञां स्वामिनोऽर्थस्य परोक्षे हरणं मतम् ।
तस्य स्वीकरणं स्तेयं मनःकर्मसमुद्भवम् ॥८६॥

कर्मात्मकस्य चौर्यस्य हेतुर्मानसमुच्यते ।
तस्मात् तद्द्विविधं प्रोक्तमतः त्याज्यं सदा नरैः ॥८७॥

अन्यदीयस्य कस्यापि वस्तुनः स्वतया पुनः ।
प्रख्यापनमपि स्तेयं हार्दिकं तत्प्रकीर्तितम् ॥८८॥

जिह्वोपस्थेन्द्रियग्राह्यः स्वादः परमदारुणः ।
मीना इव हि बध्यन्ते यद्वश्याः प्राणिनोऽखिलाः ॥८९॥

यस्यास्ति मानसे वाचि क्रियायां सम्प्रतिष्ठितम् ।
सत्यं तस्य मनः शुद्धं निर्भयं संप्रमोदते ॥९०॥

मृषास्तेयस्थितौ भीतिर्जायते तनुधारिणाम् ।
सत्ये प्रवर्तमानानां पुंसां निर्भयता सदा ॥९१॥

अहिंसासत्यसमतास्तेयादिजलधारया ।
निर्वापिते भीतिवह्नावभयं वर्द्धते नृणाम् ॥९२॥

तपोव्रतात्मता शुद्धः शारीरः श्रम उच्यते ।
येन स्यादतिलोलस्य मनसः साधु निग्रहः ॥९३॥

समदर्शितया सर्वधर्म्मेषु कृतिनो भवेत् ।
स्थिरता सत्यभावस्य सौहार्दं प्राणिमात्रके ॥९४॥

नम्रता मानसी श्रेष्ठा ययात्मा संप्रसीदति ।
तया तेषां परं ज्योतिरुदेति शिवमद्भुतम् ॥९५॥

व्रताभिपालनं सत्यशाखिनः फलमद्भुतम् ।
तत्त्यागो निरयद्वारं महत् सद्भिर्विगर्हितम् ॥९६॥

प्रियसत्यात्मतालाप सत्यव्रततरोर्नवम् ।
कुसुमं सौरभोपेतं विद्यात् भाविफलोदयम् ॥९७॥

शमादिनवकं जन्तोर्मानसस्य विशुद्धये ।
सेवनीयं प्रयत्नेन यत्र स्यादात्मदर्शनम् ॥९८॥

भक्त्यैव भक्तैर्भगवान् प्राप्यते नात्र संशयः ।
सर्वधर्मोत्तमा भक्तिरित्थं वेदेषु निर्णय ॥९९॥

हरेर्नामस्मृतिर्दिव्यगुणानाञ्चानुचिन्तनम् ।
भक्तौ यद्यपि ते यातश्चान्तर्भावं न सा पृथक् ॥१००॥

तत्प्राधान्यं तथाप्यत्र भवतीति विवेचने ।
प्रदर्शनार्थं पार्थक्यं कृतं भक्तेस्तयोर्द्वयोः ॥१०१॥

गुणानुचिन्तनादाशु सात्त्विकी हृदि जायते ।
श्रद्धा यया भगवतो भक्तिः स्यादनपायिनी ॥१०२॥

ज्ञातुं कमपि लोकेऽस्मिन् कर्तुं चाभिमुखं पुनः ।
नामरूपद्वयं दृष्टं साधनं न ततोऽन्यथा ॥१०३॥

तथेश्वरं हि विज्ञातुं सम्बोधयितुमेव वा ।
समर्थे भवतो रूपनामनी श्रद्धयार्चिते ॥१०४॥

प्रभोर्नामान्यनन्तानि सन्ति तानि शरीरिणाम् ।
सर्वाभीष्टप्रदान्येव सर्वदा नात्र संशयः ॥१०५॥

किन्तु रामेतिनामैतत् परमं पावनं मतम् ।
बीजभूतं हि सर्वेषां नाम्नां भगवतोऽव्ययम् ॥१०६॥

सर्वतीर्थोत्तमा काशी पृथिव्यामिव विद्यते ।
रामेति परमं दिव्यं विभोरखिलनामसु ॥१०७॥

कालत्वेन समाप्येषा तिथिरेकादशी यथा ।
श्रेष्ठानामत्र साम्येऽपि रामनाम सुमङ्गलम् ॥१०८॥

यथा नदीत्वसाम्येऽपि पुण्यामरसरित् तथा ।
सर्वनामसु रामेति पावनं परमात्मनः ॥१०६॥

रामेति पावनं नाम सीतासहितमुत्तमम् ।
स्मरतां दुर्लभं किञ्चिन् नास्तीह जगतीतले ॥११०॥

निर्धनानां निधिः सीतारामनाम मनोहरम् ।
निर्बलानां बलं दिव्य सर्वतेजोभिभावकम् ॥१११॥

महामृतमिद सीताराम नाम पर तपः ।
चिदानन्दमयं ज्योतिर्भजतां प्रीतिपूर्वकम् ॥११२॥

यन्महिम्ना धृता क्षोणी वनाद्रिसरिदर्णवा ।
महत्याधारभूतेयं सर्वेषां प्राणिनां स्थिरा ॥११३॥

यद्बलेन निराधारं वियत्यादित्यमण्डलम् ।
ताराग्रहादिभिर्युक्तं स्थितं भासयतेऽखिलम् ॥११४॥

अखण्डं सच्चिदानन्दमद्वैतं सर्वतोमुखम् ।
तद्ब्रह्म परमं सीतारामनाम न संशयः ॥११५॥

सर्वव्यापितया तस्य सञ्ज्ञासंज्ञित्वकल्पना ।
द्वयोरभिन्नरूपत्वात्कुतस्तत्सम्भवो भवेत् ॥११६॥

रामेति स्मरतां पुंसां भक्त्या नित्यं तपस्विनाम् ।
रितानि विनश्यन्ति दिव्यदृष्टिश्च जायते ॥११७॥

ीतारामेति मधुरं नाम कल्पद्रुमायते ।
मरतामत्र लोकानां परत्रापि सुनिश्चितम् ॥११८॥

आश्रुत्य केवलं रामनाम वाङ्मयमद्भुतम् ।
प्रणीतं विविधं पूर्वं रामायणमिति श्रुतम् ॥११९॥

शतकोटिमितं लोके राघवेन्द्रयशोङ्कितम् ।
पुण्यं रामायणं प्रोक्तं ब्रह्मेशसनकादिभिः ॥१२०॥

रामायणमहाशास्त्रं वेदार्थपरिवृंहितम् ।
सीतारामयशःकल्पद्रुमसौरभरञ्जितम् ॥१२१॥

कविराद्यो महाबुद्धिर्वाल्मीकिर्मुनिपुङ्गवः ।
आदिकाव्यमिदं प्रीत्या रामायणमरीरचत् ॥१२२॥

रामेति नाम रुचिरं सर्वदा शम्भुमानसे ।
परमानन्दधामेदं राजहंसायते सदा ॥१२३॥

स वै बलवतां श्रेष्ठो रामदूतः कपीश्वरः ।
स्मरतो रामरामेति जनान् रक्षति सर्वतः ॥१२४॥

इत्थं प्रतिदिनं देवो गान्धिर्ज्ञानवतां वरः ।
सर्वलोकहित मार्गं प्रेम्णा स समुपादिशत् ॥१२५॥

गच्छतां येन लोकानां न जातु स्खलनं क्वचित् ।
सर्वापत्तूलसंघानां दहने स विभावसुः ॥१२६॥

अथामात्यैः सुविहिता रक्षा तस्य महात्मनः ।
निर्भयस्य महाशक्तेस्तेनैव प्रतिषेधिता ॥१२७॥

यत्स्मृतौ सर्वभीतीनां तिरोभावः प्रवर्तते ।
तमांसीवोदये भानोः कथं तत्र भयागमः ॥१२८॥

यदिच्छयास्य सर्वस्य रक्षा लोकस्य वर्तते ।
तमन्यो रक्षितुं शक्तः कः स्यात् लोकत्रये जनः ॥१२९॥

स्वस्मात् स्वस्मिन् न कस्यापि भय भवति जन्मिनः ।
सर्वलोकसमस्यास्य कथं भीतिः प्रजायताम् ॥१३०॥

सम्पाद्य निखिलं कृत्यं यदर्थं तनुमग्रहीत् ।
यियासुः स निजं धाम निमित्तं समचिन्तयत् ॥१३१॥

यथा पुरा दाशरथेः स्व धाम पुनरेष्यतः ।
निमित्तं लक्ष्मणो जातो लीलानिर्मितमायया ॥१३२॥

यथा हि यादवेन्द्रस्य कृष्णस्यामिततेजसः ।
स्वलोकगमने हेतुर्व्याधिश्चानुमतोऽभवत् ॥१३३॥

तथा महात्मनो गान्धेः स्वं लोकं गन्तुमिच्छतः ।
नाथूरामोऽभवत्तस्य निमित्तं गोडसास्पदः ॥१३४॥

यथेच्छति जगद्योनिर्भगवान् विश्वभावनः ।
ध्रुवं तत् तेन रूपेण सद्यो भवति संसृतौ ॥१३५॥

एतावन्तं हि कालं यत् चक्षुर्गोचरतां गते ।
न महात्मनि तस्यासीत् द्रोहबुद्धिः कदाचन ॥१३६॥

आसीत् सुभक्तिमानस्मिन् महात्मनि कृपानिधौ ।
सहसा कथमेतस्य बुद्धौ स्यात् परिवर्तनम् ॥१३७॥

प्रणमन्निव तं गान्धिं मायाग्रसितचेतनः ।
तदिच्छयैव नलिकापातैस्त्रिभिरहन् हृदि ॥१३८॥

ब्रुवन् मधुरया वाचा राम रामेति पावनम् ।
हाहाकारै नृणां सहासावपतत् क्षितौ ॥१३९॥
समागत्या जनैस्तत्र रक्षिभिश्च समन्ततः ।
बद्धो नरपशुस्तत्र पलायनकृतोद्यमः ॥१४०॥
भारतस्याखिलामात्यैः सराष्ट्रपतिभिस्तदा ।
रुदद्भिः परिशोचद्भिर्वृतः शोणितविप्लुतः ॥१४१॥
अशक्नुवन् स्वयं वक्तुं दयालुः पुरुषोत्तमः ।
चेष्टया सूचयत् सर्वैर्युष्माभिः क्षम्यतामिति ॥१४२॥
अचिराद् भगवद्ज्योतिर्हृदि तस्य प्रतिष्ठितम् ।
सौदामिनीव तल्लीनं परमे व्योमनिस्त्वके ॥१४३॥
निर्भेद्यातिकठोरवज्रपतनोदन्तं हृदम्भोरुह ।
प्रालेयामितवर्षणं जनगणाः श्रुत्वाथ सम्मूर्च्छिताः ॥१४४॥
केचित् श्रद्दधते स्म नेदमपरे हा हा हताःस्मो व्ययम् ।
यातोऽस्तं पुनरेव भारतरविः शोकावदन्तोऽरुदन् ॥१४५॥

इति श्री मद्गान्धिचरितमहाकाव्ये श्रीसाधुशरणशर्म्म-
विरचिते अष्टादशः सर्गः ।

———

# श्रीगान्धिचरितम्

## [ एकोनविंशः सर्गः ]

अथ वृत्तमिदं क्षणादभूत्
प्रसृतं विश्वगतं मनोजवम् ।
व्यथयद् हृदयं वपुष्मताम्
अपि शून्या हरितश्च पश्यताम् ॥१

युगपत् जगतीतलं द्रुतं
तदुदन्तं निखिलं नभोगिरा ।
मिहिरांशुरिवाश्नुतोच्चकै-
रशनेः पात इवातिदुःसह ॥२

व्यलुठन् भुवि केऽपि मानवाः
श्रुततद्वृत्तविलुप्तचेतनाः ।
व्यलपन्नपरे शुचीकुलाः
उरसस्ताडनपूर्वकैर्भुजैः ॥३

मनसापि न यस्य सम्भव-
स्तदिहाचिन्तितशोकसागरे ।
सहसा पतितास्तथेतरे
मतवाचः परितापनिष्प्रभाः ॥४

गिरवोऽपि निशम्य गान्धिनो
निधनं शोकसमाकुला भृशम् ।
विगलन्नयनाम्बुधारया
परिषिक्तस्वकपोलमण्डला: ॥५

अपि लोकगुरोर्महात्मनः
सुहृदो देहवतामिमां गतिम् ।
श्रुतवान् पतितो जवाहरो
ननु संछिन्नतरुर्यथा क्षितौ ॥६

अपि धैर्य्यवतां महा ग्रणी
विधुरो मोहमुपागमत् शुचा ।
नवबाष्पकुलाकुलेक्षण
लिखितश्चित्र इव स्थितः क्षणम् ॥७

व्यलुठद् भुवि वल्लभो महान्
धृतिमान् वीरतमो विपन्नधीः ।
करुणं विलपन् विसंज्ञता—
मिव जातो हृदि वज्रताडितः ॥८

नवशोकजबाष्पधारया
वृतनेत्रो मनसा विसंज्ञितः ।
परितापविवर्णतां गतो
धृतमौनः प्रतिमेव निश्चलः ॥९

वशिनां प्रवरो विवेकिनां

प्रथमो ज्ञानवतां सुपूजितः ।

बलवन्तमुपागमत्तदा

ननु राजेन्द्रसुधीः सुकश्मलम् ॥१०

अमुना स्मरता महात्मनः

सकलान् दिव्यगुणान् महौजसः ।

हृदयेन विदूयता भृशं

चिरमालम्बितु मौनता शुचा ॥११

करणानि विमोहयन्नसा

वभि वर्षन् पुरतस्तमश्चयम् ।

कृतवान् दिवसं तमस्विनी

मिति नायं किमपि व्यलोकयत् ॥१२

पतितं भुवि शोणिताप्लुतं

पितरं वीक्ष्य हतं जगद्गुरुम् ।

सहसा स हि देवदासको

न्यपतत् छिन्न इव द्रुमः क्षितौ ॥१३

नव तातवियोगवह्निना

ज्वलदङ्गो विलुठन् महीतले ।

नयनागतनीरधारया

न मनः सान्त्वयितुं क्षमोऽभवत् ॥१४

करुणं रुदती सुविह्वला
रमणीसंहतिरश्रु मुञ्चती ।
नवशोकजवह्निहेतिभि—
र्ज्वलदङ्गा विधुरा गतप्रभा ॥१५

परितापमयैरधीश्वरैः
सचिवैः शिष्यसुभक्तमण्डलैः ।
गलदश्रुमुखैः समन्ततो
विलपद्भिः परितः स्थितं शुचा ॥१६

रुधिराप्लुत कायमुज्झितम्
शिव चैतन्य मयेत तेजसा ।
ननु सुप्तमिव व्यलोकयन्
भगवन्तं तु सभागताजनाः ॥१७

समुपेत्य महात्मनोन्तिकं
विधुरा मोहमुपागमंस्तदा ।
व्यरुदन् तदसह्यवेदना
व्यथितान्तः करणार्त्तनादिनः ॥१८

अपि राष्ट्रपिताः तपोनिधे
कथमस्मान् वृजिनार्णवेऽधुना ।
भवदीय पदाब्जनौश्रितान्
प्रविहाय क्व गतो निराश्रयान् ॥१९

अयिनाथ, दयानिधे, विभो,
कथमस्मान् प्रविहाय साम्प्रतम् ।
गतवान् भवदेक संश्रयान् ।
रुदतः शोक समाकुलानि ह ॥२०

जगतां निविडं तमश्चयं
प्रभया स्वस्य निरास्य संततम् ।
वितरन् जनतासु सम्मदं
क नु यातः सहसा भवानितः ॥२१

अपि भारतभाग्यभाष्करः
करुणामूर्तिरकिञ्चनाश्रयः ।
ननु चास्तमितो तमांसि नः
पुरतः सन्ति घनानि साम्प्रतम् ॥२२

अथ भारतनौर्महार्णवे
पतिता वोचिकुलाकुलेधुना ।
स्फुटिता नु वहत्ययं पुनः
पवमानो द्विगुणीकृतस्यदः ॥२३

कथमेतु महोदधेरियं
तरणिर्गम्यतटं महाभरा ।
रहिता खलु नाविकेन नो
निखिला संशयिता स्वतन्त्रता ॥२४

ननु दीनसुरद्रुमप्रभो
करुणासागर देव साम्प्रतम् ।
त्वयि धाम गते निजं पुन-
र्विधुरान् कः परिसान्त्वयेज्जनान् ॥२५

जगतां सुहृदं तपस्विनं
समवृत्ति रिपुमित्रयोः सदा ।
प्रहरिष्यत एव ते कथं
हृदि नासीच्च नराधम त्रपा ॥२६

परिपश्यति यस्तु सर्वदा
निखिलं जन्तुगणं निजात्मवत् ।
नृपशो विनिपातितोधुना
स हि साधुर्नतिछद्मना त्वया ॥२७

करुणायतनं निरागसं
ननु सर्वस्य शिवं समन्ततः ।
ददतं हतवान् निरर्थकं
किमिदं राक्षसते विचेष्टितम् ॥२८

अथकारकृदत्र हिंस्यते
प्रतिहिंसारुचिभिस्तु जन्मिभिः ।
उपकारपरस्तु तामसै-
रपि तिर्यग्भिरपेक्ष्य रक्ष्यते ॥२९

अथ पापवतां नराधम
प्रथमस्त्वं गणितोऽसि भूतले ।
ननु गर्हितकर्मणाधुना
द्विजजातिः सकलापि दूषिता ॥३०

अयमस्य वधस्तपस्विनोऽ-
खिल लोकस्य वधो न संशयः ।
मनसा वपुषा च कर्मणा
जगतां शन्नु वितन्वतोऽनिशम् ॥३१

अथवा हि तदिच्छया तथा
विहितं निश्चितमेव भाति नः ।
प्रभवेन्नहितं प्रधर्षितुं
ज्वलितं वह्निमिवापरो जनः ॥३२

स्मृत एव यदापदर्णवात्
जनमारक्षति साधु सर्वदा ।
कथमेतु दशामिमामसौ
परतो दुःसहतेजसांनिधिः ॥३३

अनुसृत्य स यां गृहीतवान्
जननं तद्रहितोऽपि विश्वगः ।
धृतया खलु लीलया तया
व्यधित स्वप्रतियानमीदृशम् ॥३४

अपि वा हृदये महात्मनः
परमज्ञाननिधेस्तपस्विनः ।
समुदेति यथा हि भावना
ननु तामन्यथयेन्न कश्चन ॥३५

अपि पश्यत सूर्य्यमभ्रगम्
मलिनांशुं शिथिलप्रभं शुचा ।
रुदतीरिव तर्कये भृशम्
निखिलास्ता हरितोऽपि साम्प्रतम् ॥३६

खरपांसुरयं मरुज्जना-
नपि तच्छोकजवह्नि तापितः ।
ज्वलयन्निव भाति नोधुना
विसृजन् वा मिहिकाभिवर्षणम् ॥३७

इति तत्र तदातिविह्वलम्
प्ररुदल्लोकगणं शुचान्वितम् ।
धृतिमान् सहसा समागतः
शमयन्कोऽपि जगाद मानवः ॥३८

अयि भोः सुहृदो विवेकिनः
गतिरेषा जगतो हि दृश्यते ।
मरणं ननु जन्मिनां ध्रुवं
जनुरप्यस्ति मृतात्मनां पुनः ॥३९

मरणं नियतं शरीरिणां
नहि तत्रास्ति च संशयो मनाक् ।
यदि जीवितमेव यद्भवेन्
ननु लाभः परमः स देहिनाम् ॥४०

अपि देहभृतां सुनिश्चितं
मरणं सर्वत एव विद्यते ।
अथ जीवितमेव दृश्यते
नितरां चानियतं वपुष्मताम् ॥४१

अथवा न चिदात्मनो भवे—
दपि नित्यस्य मृतिः कथञ्चन ।
स हि लोक इवेच्छया वपुः
त्यजति स्वं कलयन् यथेतरत् ॥४२

भवतीह नृणां यदा यदा
परमार्तिस्तु विभुस्तदा स्वयम् ।
धृतमूर्तिरसौ कृपानिधि
र्जगदेतत् परिपाति सर्वदा ॥४३

अथ भारतवर्षपीडनं
परितो वीक्ष्य हरिर्नराधमैः ।
परिरक्षितुमात्मपार्षदम्
ननु गान्धि प्रजिघाय भूतले ॥४४

अपि यस्य कृतेऽयमागतो
धरणीं तत् प्रविधाय सत्वरम् ।
विशति स्म पुनः स्वकेच्छया
निजलोकंकृतलीलयाधुना ॥४५

शमनोऽपि यदीयचेष्टितं
कुरुते नान्यथयेत् कदाचन ।
कथमेतु भुजङ्गमो यथा
गरुडं मृत्युरमु वशे स्थितः ॥४६

अपि मानवजन्मलीलया
निजनिर्याणविधौ निमित्तताम् ।
अनयत् खलु गोऽसास्पदं
वहुजन्मार्जितपापसंचयम् ॥४७

स्मरतामिह नाम पावनम्
सहसा यस्य विपत्तयो नृणाम् ।
किरणैरवि भास्वतो भृशम्
विलय यान्ति तमांसि तक्षणात् ॥४८

तृणकल्पजनः कथं नु तम्
प्रभवेत् हन्तुममोघशक्तिकम् ।
न हि शोधयितुं महार्णवं
किमु शक्तो वनपर्णपावकः ॥४९

यदसाध्यमभूत् जनान्तरैः
निखिलं कार्य्यं मयं विधाय ।
प्रतियन् निजलोकमीदृशम्
कृतवान् हेतुमयीच्छयात्मनः ॥५०

तदलं रुदितैस्सुहृद्गणा
अपि तच्छोकजचिन्तयाधुना ।
हृदयं हि विधीयतां निजम्
ननु पाषणमयं मनीषिणः ॥५१

रविणेव महात्मनामुना
व्रजतास्तं निजतेजसां चयः ।
निहितो ग्रहतारकौषधि—
ष्विव मन्ये त्रिक्तभक्तपुङ्गवे ॥५२

अपि दिव्यदृशां तपस्विनाम्
प्रथमो गान्धिरगाधधीरयम् ।
प्रविभज्य यथास्वभात्मनः
त्रिषु योग्येषु गुणान् समार्पयत् ॥५३

स्थिरता च गभीरता तथा
खिललोकेपुकृपालुता परम् ।
अतिकर्कशतर्कमुत्तरं
सततं साधु विमृष्य कारिता ॥५४

स्वगुण प्रियसत्यतामयम्

श्रुतिनिर्भीकतयोपबृंहितम् ।

जनताप्रियवल्लभे न्यधात्

जगदाह्लादकरे मुदा मुनिः ॥५५

समता च समस्तमानवे

भुवि सर्वत्र यथार्थवादिता ।

सतत परिणामदर्शिता

प्रियसत्यत्वजनोपकारिता ॥५६

अपि विश्वजनीनकार्यता

दृढता कर्म्मसु दक्षताक्षता ।

शुचिता च महा मनस्विता

नयमार्गानुसृतिः क्षमापरा ॥५७

जनतासुखसाधनेच्छता

सुतरां दीनजनैकबन्धुता ।

प्रियनिर्भयता निरीहिता

निजवीरव्रत पालनात्मता ॥५८

निजदेशविकाशभावना

ननु निःस्वार्थप्रवृत्तितानिशम् ।

इति दिव्यगुणान् जवाहरे

प्रियशिष्ये कृतवान् सुधीश्वरे ॥५९

अथ यत्र महात्मनो मनः
परितुष्टिर्भवतिस्म नित्यशः ।
हृदयं स च मन्यतेस्म यम्
निजमाप्तं परितः शुचिव्रतम् ॥६०

अपि च प्रति यं सदात्मनो
मनुतेऽसौ पुरुषोत्तमो न्यधात् ।
अवशिष्टगुणान् स्वकानिह
कृतिराजेन्द्रप्रसादसत्तमे ॥६१

तपसा व्रतचर्य्यया स्वया
जनतासेवनकर्म्मणा मुदा ।
परिपश्यति यं महामुनिः
प्रतिमानं नवमागतं निजम् ॥६२

मयि धामगते भुवो निजं
निखिलं यद् व्रतमस्ति मामकम् ।
जनता स्यमेव दर्शयेत्
इति तत्रैव च तत् समार्पयत् ॥६३

अथ धर्म निधिर्महामनाः
समदर्शी करुणानिकेतनः ।
श्रुतिदर्शितधर्मपारगः
सुतरां सेतुविधारकः सताम् ॥६४

सुविमृश्य नरोत्तमो न्यधात्
निजधर्मप्रियतां शुचिव्रते ।
तत एव च भीरुतां पुनः
प्रथितेऽस्मिन्नपि शाश्वतीं स्थितिम् ॥६५

इति तत्र तदा सुविह्वला—
नपि तच्छोकसमाकुलान् नरान् ।
उपदिश्य महाजनार्णवे
स तु यातः सुतरामलक्ष्यताम् ॥६६

अथ तत्र जनत्रयी तदा
प्रसरन्तं नवशोकमात्मगम् ।
परितो विनिवृत्य चेतसा
समयौ चिन्तयमंस्त वर्तितुम् ॥६७

अथ केऽपि समागता जनाः
श्रुततद्वृत्तिविचेतसः शुचा ।
द्रुतगामिनभोविमानतो
ह्यपरे मृत्तरयाण्ययानतः ॥६८

चलवन्नवशोकजाश्रुभिः
परितः पूर्णविलोचना जनाः ।
सहसाभ्यपतन् दिदृक्षया
पितरं तं जगतां तपस्विनम् ॥६९

महिलाकुलमश्रुधारया
सततं व्याप्तमुखाम्बुजं दधत् ।
विलपन्नवशोकविह्वलं
व्यथितं तत्र तदोपतिष्ठत ॥७०

शिशुभी रमणीव्रजैः समं
पुरुषावृद्धगणैश्च सोत्सुकैः ।
बहुकोटिकसंख्यकास्तदा
व्यथमानाः समुपागमन् हृदा ॥७१

न पुरेयमभूत् पुरीदृशी
जनसम्बाधसमाकुला तदा ।
निजधाम गते महात्मनि
त्वरयोपेतजनव्रजैर्यथा ॥७२

निखिलं जनुरेव चात्यगात्
जगतां शं ददतो दिवानिशम् ।
अपि यस्य निजोऽर्थ ईक्षितो
जनता स्वार्थमृतेन कुत्र चित् ॥७३

स्वपरत्वविभावना सताम्
महिते वर्त्मनि तिष्ठतोऽनिशम् ।
न कदाप्युदिता तपस्विनो
हृदि यस्यापि यशस्विनः क्षणम् ॥७४

उदधौ पयसामिवागमो
ननु यस्मिंस्तु भवत्यवारितः ।
करुणायतने शरीरिणां
निखिलानां मनसाभिनन्दितः ॥७५

अचिरान्निजदिव्यतेजसा
परवन्तं खलु भारतं चिरात् ।
कृतवान् निरवग्रहं विना
समरं यो जनतासुरद्रुमः ॥७६

अथ तस्य महात्मनः प्रभोः
किल कर्तुं वपुषः सुसंस्कृतिम् ।
यमुनापुलिनं सुपावनं
सममन्यन्त तदा सुधीश्वराः ॥७७

सुरसिद्धमहर्षिपूजितं
निजलोकं समुपेयुषो जनाः ।
सममंसत देहसंस्कृतिं
शुचि कर्तुं पुलिनं सुयामुनम् ॥७८

उदयादि यतोऽमरापगा
तत एवापि विवस्वतः सुता ।
शिवमाधवसंश्रयादुभे
सितकृष्णाम्बुतया प्रसिद्ध्यतः ॥७९

सितशम्भुजटाधिवासतः
द्युनदी श्वेतजलाभ्यजायत
हृदि संततमच्युतस्थितेः
रसिताम्भाश्च कलिन्दकन्यका ॥८०

उभयोरथ नामनी शुभे
सदृशैः स्वैरतिपावनैर्गुणैः ।
प्रभवैकतया सधामनी
भुवि गंगा यमुनेति निर्मले ॥८१

अथ तस्य महात्मनो वपुः
दिविषद्भिः कुसुमैः समर्चितम् ।
रुचिरैः पृथिवीसुदुर्लभै
र्नवमाल्यैर्निजसौरभाश्चितै ॥८२

अपि तद्भमितं सुपावनं
पुलिनं यामुनमूर्म्मिपूजितम् ।
कुसुमैर्ललितैः स्रजां चयैः
परितो भक्तगणैः समर्चितम् ॥८३

नयनाम्बुमुखैर्नरव्रजैः
नवगन्धैर्बहुपुष्पराशिभिः ।
रमणीशिशुवार्द्धकैः समं
प्रणिपातेन तदाभिपूजितम् ॥८४

अथ तस्य तपोनिधेः पितुः
गुणवान् तत्तनयः सुभक्तिमान् ।
विधिवद् व्यधितान्त्यसंस्कृतिं
श्रुतिमार्गेण कुलोचितामसौ ॥८५

निजवीचिकरोद्धृतैरसौ
रविजाशीकरपुष्पवर्षणैः ।
अभिपूज्य समाहरन्मुदा
ननु गर्भेऽस्य रजांसि वन्दितुम् ॥८६

यमुना सलिलं व्यवर्द्धयत्
श्रितकल्लोलकुलाकुलं तदा ।
प्रभुपार्षददेहधूलिभिः
सफलीकर्तुमनाः स्वमञ्जसा ॥८७

अभवत् मधुरं सुपावनं
रघुवंशाधिपनामकीर्तनम् ।
विगलन्नवबाष्पविन्दुभि.
क्रियमाणं मनुजैस्तदागतैः ॥८८

अपि विश्वपितुर्महात्मनो
यशसा चन्द्रमसेव चानिशम् ।
रविणेव जगच्च तेजसा
निखिलं भासयतो जनैः कृतः ॥८९

पुलिने यमुनोर्म्मिमालया
परिपूते कुसुमैः समर्चिते ।
जनतानवबाष्पधारया
परिषिक्ते च समाधिरुत्तमः ॥९०॥युग्मम्॥

कालिन्दीसरिदुर्मिफेनकुसुमैर्यत् सर्वदाभ्यर्चितं
गान्धिक्षेत्रमिति प्रसिद्धिमगमत्तद् राजघाटाभिधम् ।
श्रीमन्मोहनदेहपूत रजसां संस्पर्शनादुत्तमं
तीर्थं तत् खलु वर्द्धतत्यतितरां श्रीमिन्द्रप्रस्थाश्रयाम् ॥९१

ततः प्रभृत्येतदभूत् सुतीर्थं
पुण्यं नवं रम्यतमं जनानाम् ।
लोकैरशेषैरभिवन्द्यमानं
श्रेयोर्थिनां कामदुघं प्रशस्तम् ॥९२

पुण्यात्मनामुद्भवसन्निधान-
स्थिति स्व निर्याणतया जगत्याम् ।
तीर्थं महद् देवमनुष्यवृन्दै-
रभ्यर्च्यमानं भवतीति दृष्टम् ॥९३

तदस्थिभस्मानि परं पवित्र-
भूतानि पुण्येष्वखिलेषु भक्तैः ।
तीर्थेषु गंगादिसरिद्वरेषु
प्रचिक्षिपुः श्रद्धतस्तदानीम् ॥९४

तस्याथ शिष्या अपि भक्तमुख्याः
स्वं स्वञ्च निन्युर्विषयं सुभक्त्या ।
पूजार्हमेतन्महनीयकीर्तेः
भस्मास्थि संस्थाप्य समर्चनार्थम् ॥९५

एवं स्वधामोपगते महात्म-
न्यूभूत् परं यद्यपि शोकसिन्धौ ।
महोर्मिमालाकुलिते नितान्तं
मग्नं परं भारतवर्षमेतत् ॥९६

तथापि पश्यत् पुरुषत्रयीं तां
गुणैरमर्त्यैर्महितां तदेतत् ।
अलब्धभानोरचिरोद्गतस्य
बालातपैर्भिन्नसरोजलक्ष्मीम् ॥९७

स वल्लभो नीतिविदां वरिष्ठो
वीराग्रणीस्तां किल भारतस्य ।
नष्टां समृद्धिं निखिलां पुरेव
सद्यः समावर्तयदात्मबुद्ध्या ॥९८

महात्मनोऽपेक्षितमेव राम-
राज्यं जनानां सुखदं नितान्तम् ।
स्वयं व्यवस्थापयदाशु धीमान्
सत्यव्रतो लोकहितैककार्य्यः ॥९९

सत्यप्रियो नीतिमतां वरिष्ठो
गुरुः सुराणामिव कालदर्शी ।
प्रत्यानयत् भारतगौरवं तत्
जवाहरोऽसौ सचिवप्रधानः ॥१००

यथा पुरा भारतवर्षमासीत्
सर्वस्य लोकस्य गुरुश्च मान्यम् ।
तथाधुनेदं हि जवाहरीय-
नीत्या च शान्त्या च विभाति सम्यक् ॥१०१

आपद् घनध्वान्तमयेऽपि मार्गे
विवेकदीपप्रभया सुखेन ।
नयन्नयं सर्वजनानिदानीं
करोत्यमन्दप्रमदोपगूढान् ॥१०२

जलस्थलव्योमगतेषु भव्या-
मभ्युन्नतिं साधितवान् सुधीन्द्रः ।
यया जयश्रीः परिशोभतेऽथ
श्लाघ्या त्रिलोक्यां खलु भारतस्य ॥१०३

विज्ञानशिल्पादिकलादिवृद्धौ
अल्पेन कालेन यदीययोगात् ।
तथा विकासं भजतीदमद्य
यथा च देशान्तरतो विशिष्टम् ॥१०४

आग्नेयनानाविधनव्यशस्त्रा-
विष्कारदिश्येतदनूनमास्ते ।
देशान्तरेभ्यश्च विवेकशान्ती
धत्ते विशिष्टे च ददानमेभ्यः ॥१०५

महामतिर्धीरतमः पृथिव्यां
मान्यः सतां ज्ञानवतां वरेण्यः ।
दयार्णवः सर्वजनैकबन्धुः
सुधीश्वरः शान्तिमहासमुद्रः ॥१०६

सत्यव्रतोऽकिञ्चन कामकल्प-
द्रुमः शरण्यो वरदो वदान्यः ।
स्थितेरभेत्ता जगताश्च वेद-
प्रोक्ताखिलाचारसुपालको यः ॥१०७

या सभ्यता संस्कृतिरप्यनादिः
सनातनो धर्म इति प्रसिद्धा ।
चिरन्तनैरार्य्यगणैर्गृहीता
सा श्रद्धया सेवत एव नित्यम् ॥१०८

आसीद् यथा राष्ट्रपिता महात्मा
धर्मैकमूर्तिः परमात्मदर्शी ।
तथाधुना राष्ट्रपतिः तपस्वी
धर्मानुरागी धृतिमान् विवेकी ॥१०९

यथाभ्यलभ्यत् महनीयकीर्तिः
गान्धिर्महात्मा भुवि रामराज्यम् ।
श्रीमान् प्रसादः कुरुते तथायं
तत् साम्प्रतं भारतसार्वभौमः ॥११०

या विश्वभाषा जननी प्रसिद्धा
यस्याश्च वेदो भगवान् विभाति ।
यत्रोत्तमाध्यात्मरहस्यविद्या
सद्ज्ञानविज्ञाननिधिश्च दिव्यः ॥१११

नानाविधानां निगमागमानां
काव्यात्मनाश्च प्रथमो विकास ।
यत्राभवत् तत् सुरभारतीयाम्
श्लाघ्यां प्रतिष्ठामतनोत् सुधीशः ॥११२

काश्यां वृते सुरगवीपरिषद्विधाने
स्वाध्यायपूतरसनान् शतशः सुधीन्द्रान् ।
विप्रान् शुचीन् निखिल वेदविदो विधिज्ञान्
यज्ञे युधिष्ठिर इवार्चयदादरेण ॥११३

पाद्यार्घ्यदानकुसुमाक्षतचन्दनैश्च
माल्यैर्नवैः सुरभिभिः शुभधूपदीपैः ।
योग्यासनोपरिगता विविधोपहारैः
तेनार्चिताः परममोदमवापुरेते ॥११४

येनार्चिता सुरगवीसमुपासकास्ते
विद्वद्वराः सुकवयोः धवलैर्यशोभिः ।
सर्वं जगत् सितयतः पुनरागत तं
मन्यन्त एव नृपतिं भुवि भोजदेवम् ॥११५

इत्थं गुणेन जनताभिमतार्थदानात्
राष्ट्रेश्वरेण विहितादभिरक्षणाच्च ।
प्राप्तोदयं मुदितलोकगणं समन्तात्
श्रीमद् विभाति भुवि भारतवर्षमेतत् ॥११६

साङ्गानधीत्य विधिवच्चतुरोऽपि वेदान्
भाषान्तरैर्बहुविधैः सह शास्त्रजातैः ।
सङ्कल्पितं भुवि गुरोरिह रामराज्यं
कर्तुं प्रतिष्ठितमसौ यतते विनोबाः ॥११७

सूर्ये विभास्य जगदस्तमिते यथेन्दु
र्विद्योतयत्यतितरां तदनुप्रकामम् ।
लोकांस्तथाशु सुखिनः प्रविधाय धाम
प्राप्ते महात्मनि सुखं तनुते स धीमान् ॥११८

भूदानयज्ञमतुलं जगतां शिवार्थं
निर्भूमिदुःस्थितजनामरकल्पवृक्षम् ।
पद्भ्यां भ्रमन् निखिलभारतमिद्धतेजाः
कुर्वन् विभाति भुवि गान्धिपथे स्थितोऽयम् ॥११९

नैरुज्यमृद्धिरतुलाथ सुपूर्णमायुः
पुंसाञ्च यत्र निजधर्मरुचिश्च मैत्री।
तद् रामराज्यमखिलार्थकरं जगत्यां
भूयात् समस्तजनतासुखद पुरेव ॥१२०

आपूर्वादरुणांशुभिन्नसलिलादासेतुबन्धोज्ज्वलात्
आगस्त्याच्च विशाल वीचिमहितात् आपश्चिमादर्णवात्।
आ चाद्रीश्वररम्यशृंगनिवहात् आजत्पताकं भृशं
श्रीमद्गान्धियशोविभूतिमहितं श्रीभारतं वर्द्धताम् ॥१२१

वर्षे रामसृगाङ्कपुष्करभुजे श्री वैक्रमाख्ये शुचौ
कृष्णे नागतिथौ दिने दिनमणेरेतत् सुकाव्यं नवम्।
सीतारामपदारविन्दकृपया गूढार्थमत्युज्ज्वलं
पूर्तिं प्राप्तमथ श्रियं वितनुतामभ्यस्यतां सर्वथा ॥१२२

श्री साधुपूर्वशरणेन कवीश्वरेण,
राजीववद् विकसितं रचितं सुकाव्यम्।
आस्वादयन्तु सरसं रसिका विपश्चिद्
भृङ्गा निरन्तरमिदं महतादरेण ॥१२३

इति श्रीगान्धिचरिते महाकाव्ये श्री साधुशरणमिश्रविरचिते
एकोनविंशः सर्गः समाप्तः

समाप्तश्चायं ग्रन्थः

———

अथ श्रीगान्धिचरितप्रणेतु—

# वंशपरिचयः

महर्षिवृन्दैर्विबुधव्रजैश्च

समर्चिते सिद्धगणैः समन्तात्।

श्रीरामयज्ञे हयमेधसंज्ञे

समाययुर्ब्राह्मणकान्यकुब्जाः ॥१॥

यज्ञे समाप्ते पुनरेव यातान्

स्वानाश्रमान् तत्पितृबन्धुमुख्याः

तान् नाभ्यनन्दन् स्वमृपाभिजात्य

मानाद् गुणेष्वप्यथ दोषदृष्ट्या ॥२॥

ततः परावृत्य पुनर्द्विजास्ते

श्रीराममीयुर्जगतामधीशम्।

महीशमौलिस्थितरम्यनाना-

मणिप्रभाभूषितपादपीठम् ॥३॥

ब्रह्मेशविष्ण्वादिसुरेशसिद्ध-

योगीश्वराभ्यर्चितपादपद्मः।

प्रपन्नलोकार्तिहरो रघूणा

मीशो नुजग्राह दयालुरेनान् ॥४॥

या मानससरोजाता सरयूः सरिताम्वरा।

वीचिकल्लोलनिःस्वानैः कलुषाद्रिनिपातिनी ॥५॥

पावयन्ती जलैः पूतैः शीकरैश्चापि वायुभिः ।
योजनादधिकं कूलमुभयं जान्हवीव या ॥६॥

तस्या उत्तरतीरे स्यात् पुण्यक्षेत्रे प्रतिष्ठिता ।
युष्माकं वसतिः पुण्या भूसुराः पुण्यकर्म्मणाम् ॥७॥

सरयूपारसंवासात् सरयूपारिणो द्विजाः ।
कालादस्मान् ममादेशाद् भविष्यथ शुचिव्रताः ॥८॥

इति श्रीरामचन्द्रेण सत्कृता द्विजपुगवा ।
विख्याताः सरयूपारोसंज्ञया जगतीतले ॥९॥

गोरक्षपुरतोऽगस्त्यप्राचीविदिशि भूसुराः ।
उपसरयूसरितकूल औदीच्ये न्यवसन् पुरा ॥१०।

ततोऽसौ सरुआरेतिख्यातो जनपदोऽभवत् ।
वेदस्वाध्यायिभिर्विप्रैः सेव्यमानस्तपस्विभिः ॥११॥

तत्र गौतमगोत्राणां, द्विजानां पुण्यकर्म्मणाम् ।
निवासः पिपराग्रामे तीर्थीभूतेऽभवत् तदा ॥१२॥

ततो ज्योतिर्विदां श्रेष्ठो विद्वद्भि परिपूजितः ।
छपरान्तर्गतं धीमान्, लकड़ीग्राममीयिवान् ॥१३॥

तस्मादपि पुरात् सूरिः शोभामिश्रोऽतिविश्रुतः ।
सर्वशोभानिधिः प्राप्तो बेतियाधीश्वरं श्रमन् ॥१४॥

तेनार्चितोऽसौ पृथिवीश्वरेण तद्दत्तभूमौ कृतसंनिवासः ।
प्रष्टुं स्वदिष्टं खलु लोकसंघैः समाव्रजद्भिः परिपूज्यमानः ॥१५॥

काकशब्दैर्जनानां यत् ब्रूतेस्म निखिलं फलम् ।
तद्ग्रामनाम कौआहेरयभूद्रूढमिद ततः ॥१६।

तदन्वयेऽभूत् श्रुतिपारदर्शी श्रीमान् सदाचाररतः तपस्वी ।
प्रमोदयन् सर्वजनान् निजेन प्रेम्णा ततः प्रेम इति प्रसिद्धः ॥१७॥

ततोऽभवत्तत्तनयो महात्मा नीगाभिधानो विदुषां वरिष्ठः ।
यं प्राप्य सर्वे प्रतिपक्षिणस्ते सूर्यं तमांसीव निराशमीयुः ॥१८॥

तत्सूनुः समभूत् सुधीश्वरगणैराश्रीयमाणः सितै-
र्धीमान् श्रीपल्लकाभिधो निजयशस्तोमैर्जगद् द्योतयन् ॥
रम्यैश्चन्द्र इवांशुभिः स चतुरो ब्रह्मेव वेदान् सुधी ।
पुत्रानात्मसमान् शुचीनजनयत् शिष्टान् विशिष्टान् गुणैः ॥१९॥

तेषां त्रिलोकीतिलकस्त्रिलोकनामा वरिष्ठो वयसा गुणैश्च
यो तीर्थसेवोपधिना व्यहासीदसारसंसारमिमं विरक्तः ॥२०॥

ततोवरः श्रीरघुवीरनामा पूज्यः सतां ज्ञानवतां वरेण्यः
भेजे सदाचार इवात्तदेहः सदर्शयन् धर्म्मगतिं जनानाम् ॥२१॥

विद्वद्वृन्दसमर्चिताङ्घ्रिकमलो लोके वहोराभिधः
सच्छास्त्रार्णवपारगो बुधवरो ज्योतिर्विदामग्रणीः ॥
सृष्टेर्विश्वसृजीव यत्र महतः स्वस्यान्वयस्याभवत्
सत्कीर्तेरनपायिभिर्गुणगणैः श्लाघ्यो विकासो महान् ॥२२॥

श्रीक्षेतियाधिपसुपूजितपादपद्मो योऽध्यापयन् द्विजवटूनसुधियोऽप्यधत्त
तारापथं विधुरिवर्क्षगणैरमीभिर्लोकं व्यभासयत कीर्तिकदम्बकल्पैः

ततोऽवरः श्रीजयराममिश्रः सुधीश्वरोऽभून्महनीयकीर्तिः ॥
यः साम्बशम्भोश्चरणारविन्द परागपीयूषरसाभितृप्तः ॥२४॥

सर्वागमारण्यमृगाधिनाथो वादे विजिग्ये निखिलान् विपक्षान् ॥
पुरोऽस्य केऽपि प्रतिपक्षवर्गाः स्थातुं तमांसीव रवेर्न शेकुः ॥२५॥

यत्कीर्तिमण्डलमभूत् शरदिन्दुकान्तं,
नक्तन्दिवं धवलयन् जगतीं विरेजे ।
तस्याथ सर्वपृथिवीपतिपूजितस्य, कृष्णप्रतापनृपतेर्हथुवेश्वरस्य ॥
विद्वद्गणैर्विविधशास्त्रविचारदक्षै रत्नैरिव द्युतिविभासितसर्वलोकैः
विख्यातिमद्भिरनिशं परिसेवितायां
सम्मानमालभत यः सततं सभायाम् ॥ २७ ॥

तस्मादधीतविविधागमगूढतत्त्वैः
शिष्यैः सुधीशपदवीमचिरात् प्रपन्नैः ।
बिम्बादिव ग्रहपते किरणैः प्रयातै
र्लोको वभौ हि महतां महिमेत्थमास्ते ॥२८॥

ततोऽभवन् पञ्चसुताः सुवृत्तयो महान्ति भूतानि यथात्मनः परात्
निसर्गजै सौम्यगुणैर्विभूषिताः स्वधर्म्मनिष्ठा भुवि लब्धकीर्तयः ।
गाम्भीर्ये तुलितार्णवो गिरिगुरुः स्थैर्ये क्षमायां क्षितिः
शाखी सर्वजनोपकारकरणे ज्ञानैकमूर्तिर्महान् ।
सद्धर्माभिरुचिस्त्रयीमनुगतः शान्तः सतामग्रणी-
र्ज्यायांस्तत्र सुधीश्वरो भगवतीनामा प्रसादोत्तरः ॥३०॥

शुद्धे यदीये हृदि कामक्रोधरुषां न जन्माप्यभवत्कुतश्चित्
न चापि जिह्वापरिहासबुद्ध्या गोष्ठ्यामवादीदनृतं कदाचित् ॥३१॥

ततोऽनुजातो विदुषां वरेण्यो विन्ध्येश्वरीशर्म इति प्रसिद्धः ।
यस्तर्कशब्दाद्यखिलागमाब्धेः पारंगमी सत्यरुचिर्मनस्वी ॥३२

यः स्वीयतर्कैः प्रतिपक्षिवर्गान् सद्यो निरस्यान्मृगराडिवेभान् ।
त्यागैकनिष्ठः सततं दयालुः परोपकारव्रतवान् मनीषी ॥३३

गोपालमिश्रश्च ततोऽपरोऽभूच्छान्तस्वरूपः परमस्तपस्वी ।
शत्रुञ्च मित्रञ्च परं स्वकं वा तुल्यं समालोकत धीरबुद्धिः ॥३४

यथा स्वमूर्ध्ना सहमान एव वर्षातपौ नाम नगस्तलस्थम् ।
छायाफलैः प्रीणयतीह लोकन्तथा स्वबन्धून् समसेवतायम् ॥३५

कनिष्ठः सर्वबन्धूनां गुणैर्ज्येष्ठः सुधीश्वरः ।
राधावल्लभमिश्रोऽसौ मनस्वी कृतिनां वरः ॥३६

यथार्थवादी निर्भीको नीतावुशनसा समः ।
गाम्भीर्ये तूदधिः स्थैर्ये गिरिः क्षान्तौ युधिष्ठिरः ॥३७

श्रीसाधुपूर्वः शरणाभिधोऽहं तुर्यः सगर्भ्येषु विमुग्धबुद्धिः ।
प्रणीतवान् काव्यमिदं स्वमत्या भवेदुमाजानिरनेन तुष्टः ॥३८

# श्रीगान्धिचरितमहाकाव्ये

## शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | पंक्तिः |
|---|---|---|---|
| तौ | द्वौ | १ | १० |
| ध्यै | धै | ३ | १४ |
| पञ्जपोपदेशं | यञ्जपोपदेशं | ६ | ७ |
| पूर्णत्तणः | पूर्णेत्तणः | १० | १२ |
| वाज्ञा | याज्ञा | १४ | ३ |
| गौरवत् | गौरवात् | २० | १ |
| शिशौ | शिशु | २१ | २ |
| मारुताम् | मरुताम् | २१ | ८ |
| मद्रिर | मन्दिर | २१ | ७ |
| सहितौ | सहितो | २४ | १० |
| वदिस्यतीति | वदिष्यतीति | ३२ | १ |
| देशाभ्यगमाय | देशाभिगमाय | ३३ | ६ |
| स्वकीयाश्व | स्वकीयाश्व | ३६ | ४ |
| तथवै | तथैव | ३६ | ५ |
| स्यादमलाय | स्यादपलाप | ३६ | ७ |
| कुहु निरन्तरम् | कुहु निरन्तरम् | ३६ | ९ |
| तारकाचितिम् | तारकार्चितम् | ३८ | २ |
| स्वधर्म्म | स्वधर्म्मं | ३८ | ६ |
| रक्षा | रक्षाम् | ३८ | ८ |
| भावोऽपि | मानोऽपि | ३९ | ६ |
| स्वशिपो | स्वाशिषो | ३९ | १२ |
| प्रसन्ना | प्रसन्ना | ३६ | १२ |
| वाश्म | वाष्प | ४१ | १० |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | पङ्क्तिः |
|---|---|---|---|
| राजिभिर | राशिभिर्र | ४४ | ५ |
| परिभ्रमितु | परिभ्रमितुम् | ४५ | ३ |
| किञ्चिन | किञ्चन | ४६ | ६ |
| गणैः | गुणैः | ५० | ५ |
| मगृन्निति | मगृट्णन्निति | ५० | ६ |
| स्यां | स्वाम् | ५० | ८ |
| प्रिवेय | पिवेयम् | ५४ | ५ |
| मदिरान | मदिरान्तु | ५४ | ५ |
| चन्द्रद्युतय | चन्द्रद्युतयो | ५४ | १४ |
| शिखरेः | शिखरैः | ६० | १ |
| तद्दर्शनमहोत्सवः | तद्दर्शनमहोत्सवः | ६० | १० |
| समुत्थाया | समुत्थाप्या | ६० | ११ |
| रायासिञ्चत | रभ्यषिञ्चत | ६० | १२ |
| दीनानि | दिनानि | ६३ | १५ |
| अवण | अवज्ञाम् | ६३ | १८ |
| विभानना | विमानना | ६४ | २ |
| मेषाम् | मेषा | ७० | १७ |
| गाधि | गान्धि | ७० | १८ |
| पमासीत् | यत्रासीत | ७२ | ८ |
| लुधक | लुराठक | ७३ | ८ |
| भीतात् | भीमात् | ७५ | ६ |
| प्रभा | प्रभा | ७५ | २० |
| निधा | निधी | ७६ | ७ |
| स्वयम् | स्वम् | ७६ | ८ |
| मन्यन् | मन्यम् | ७६ | ९ |
| अथाधुन | अथाधुना | ७६ | ११ |
| यथेदं | यथेम | ७६ | १५ |
| पारस्परिको | पारस्परिकं | ७६ | १५ |
| विभेदः | विभेदम् | ७६ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | पङ्क्तिः |
|---|---|---|---|
| संस्थात्य | संस्थाप्य | ७६ | १६ |
| विनिष्टो | विनष्टा | ७७ | ११ |
| शेपे | शेपे | ७८ | ४ |
| यां | या | ८१ | १६ |
| नाम्मः | नाम | ८६ | ६ |
| कृतौ | कृती | ८८ | २ |
| विप्रात | विप्रान् | ८८ | ४ |
| विजय | विनय | ८९ | १४ |
| सागरोर्म्मि | सागरोर्म्मौ | ९० | १० |
| सैन' | सैन्यः | १८३ | ६ |
| मुत्पाद्य धोरो' | मुत्पाठ्य धीरः | १८३ | ११ |
| न्यसूश्चापि | न्यसुंश्चापि | १८८ | १७ |
| न्यसुश्चापि | न्यसुंश्चापि | १८९ | ६ |
| निग्रहीताः | निगृहीताः | १८९ | ८ |
| हन्यमाना | हन्यमानाः | १८९ | १२ |
| माश्रयके चित् | माश्रय केचित् | १९१ | ८ |
| तत्फल | तत्फल | १९२ | १० |
| नाथ | नाय | १९२ | १५ |
| वैराग्य | वैराग्यं | १९८ | १० |
| कर्मभि | कर्मभि | १९८ | २० |
| मरता | स्मरता | २०२ | २० |
| स्त्वकं | स्वके | २०५ | १० |
| शाको वदन्तः | शोकोद् वदन्तः | २०५ | १४ |
| शुचोकुला | शुचाकुला | २०६ | ११ |
| मतवाचः | गतवाचः | २०६ | १६ |
| कायर्मुज्झि० | कार्यमुज्झि० | २०९ | ९ |
| मयेत | मयेन | २०९ | १० |
| भाष्करः | भास्करः | २१० | ९ |
| अयकार० | अपकार० | २११ | १० |

| अशुद्धम् | शुद्धम् | पृष्ठाङ्काः | पंक्तिः |
|---|---|---|---|
| पापवत | पापवता | २१२ | १ |
| गोऽसास्पदै | गोडसास्पदं | २१५ | ११ |
| किरणैरवि | किरणैरिव | २१५ | १५ |
| शोर्धयितुं | शोषयितु | २१५ | १९ |
| कार्य्यं | कार्यं | २१६ | २ |
| मयीच्छया | मथेच्छया | २१६ | ४ |
| सभात्मनः | स्वमात्मनः | २१६ | १५ |
| स्वमेव | स्वयमेव | २१८ | १५ |
| विनिजृत्य | विनिगृह्य | २१६ | ११ |
| सतत | सतत | २२० | ७ |
| वद्धगणैश्च | वृद्धगणैश्च | २२० | ६ |
| इदि | हृदि | २२० | २ |
| उदयादि | उदपादि | २११ | १७ |
| स्थितेः | स्थिते | २२२ | ३ |
| भासयतो | भासयता | २२३ | २० |
| वर्द्धतत्य० | वर्द्धयत्य० | २२४ | ८ |